तरुणिममदनेभोऽमुष्य सा पूर्ववृत्ता
विलसति मदलेखा रोमलेखा मृगाक्ष्याः ॥ 73 ॥

**कलकण्ठः** - कालिन्दि, अस्माभिरपि किञ्चित् प्रार्थ्यसे ।

**कालिन्दी** - आणवेदु महाभाओ । [आज्ञापयतु महाभागः ।]

**कलकण्ठः** - (हारमङ्गुल्या निर्दिश्य)

हारोऽयं मम सख्युराननगलद्वाणीविलासस्मित-
स्पर्धी[1] मन्दरभिन्नचन्द्रशकलप्रख्यैः कृतो मौक्तिकैः ।
सूतैर्मध्यमहेन्द्ररत्नकिरणश्रेणीभिरारञ्जता
यत्कान्तिर्यमुनोर्मिमिश्रखसरित्कल्लोलहल्लोहला[2] ॥74॥

**मारुतः** - वयस्य, वर्णननिपुणोऽसि ।

**कालिन्दी** - णं जाणीअदि एसो, जो सहजोत्ति वण्णिदो भअवईए । [ननु ज्ञायत एषः, यः सहज इति वर्ण्यते भगवत्या ।]

**कलकण्ठः** - तदेनमपि कृतार्थय तत्रभवत्या कण्ठार्पणेन[3] ।

**कालिन्दी** - (स्वगतं)

मण्णे मारुअदंसणेण किंवि उक्कण्ठिआ एव्व मल्लिआ । ता अह्मेहिं एव्व पत्थणिज्जो सन्दावसन्तीए ।

---

1. स्यन्दो, $त_{2}$, $अ_{1}$
2. हलं, $म_{1}$, $त_{2}$, $मै_{4}$, $के_{1}$, $के_{2}$, $अ_{1}$, $मु_{2}$
3. om कण्ठार्पणेन, $म_{1}$, $त_{1-2}$, $मै_{1}$, $मै_{3}$, $के_{1}$, $मु_{1}$

(प्रकाशं)

रमणिज्जो खु तुह्माणं विणिमओ। अहं तु जहणिद्दिट्ठं करेमि।

[(स्वगतं) मन्ये मारुतदर्शनेन किमप्युत्कण्ठितैव मल्लिका। तस्मादस्माभिरेव प्रार्थनीयः सन्ताप-शान्त्यै। (प्रकाशं) रमणीयः खलु युवयोर्वि-निमयः। अहं तु यथानिर्दिष्टं करोमि।]

**मारुतः** – (हारं कण्ठादवरोप्य),

**कालिन्दी** –

न केवलमसौ हारो दीयते हरिणीदृशे।
अहं च तद्गुणक्रीतो दत्त एवास्मि गृह्यताम् ॥75॥

**कालिन्दी** – (हारं गृहीत्वा, सस्मितं, स्वगतं)

महाभाअ, सच्चवअणो होहि।

(प्रकाशं)

गहिदो एव्व अह्मेहिं गच्छेम अणाकरणस्स।

[(हारं गृहीत्वा, सस्मितं, स्वगतं) महाभाग, सत्यवचनो भव। (प्रकाशं) गृहीत एवास्माभिः तस्माद्गच्छामि आज्ञाकरणाय।]

**मारुतः** – तथा।

(कालिन्दी निष्क्रान्ता)

**मारुतः** – सखे !

ज्ञातं कुले महति जन्म वराङ्गनान्याः
प्राप्ता च [1]तत्कुचयुगान्तरलालिता स्रक् ।
भावोदयस्य सुतनोरपरिस्फुटत्वात्
तापस्तथापि हृदये[2] तदवस्थ एव ॥ 76 ॥

**कलकण्ठः** – स्फुट एव माल्यदानादिभिरनुरागोऽपि।

**मारुतः** –

माल्यदानात्कथं नाम रागसत्ता प्रकल्प्यते ।
अन्यदौदार्यसौहार्दमन्यदाकूत[3]चेष्टितम् ॥ 77 ॥

(सन्तापं प्रकटयन् )

नो [4]वात्माक्षगवाक्षतः प्रभवति द्राक् तत्तदर्थग्रहे
स्मर्तुं प्रागनुभूतवस्तु न तथा संस्कारमोषादलम्[5]।
अद्यान्धंकरणेन केनचिदहो तापेन मूकं मनो
मध्याह्नातपमूढकैरवपुटीमध्यद्विरेफायते ॥78॥

(नेपथ्ये)

**वैतालिकौ** – जय जय जगन्नयनचकोरचन्द्र !
सुखाय ते भवतु माध्यन्दिनी सन्ध्या ।

---

1.॰ तट, $त_2$, $के_1$, $के_2$, $अ_1$ 2. हृदि मे, $अ_1$ 3. आकृति, $मु_1$ 4.बाह्याक्ष,॰ $मु_2$
5. मोक्षादन्तम्, $त_2$, $के_2$

**एकः-**

नखंपचमधुद्रवं नलिनगर्भमिन्दिन्दिरो
विमुञ्चति सुशीकरे शिशयिषुर्द्विपानां कटे ।
द्रुतं सरसि शैवलोदरकुडङ्गमुष्णालवो
विशन्ति विवशा झषा दिनकरे ललाटंतपे ॥79॥

**अपरः -**

तोयं तोयमिति ब्रुवन्ति तृषिताः केलीशुकाः पञ्जरे
धारावारि पृषन्ति यन्त्रभवने लीढे मयूरार्भकः ।
उद्यानोदरसारिणीपरिसरे क्रीडामृगाः शेरते
याता सम्प्रति नूनमातपभिया छायाऽपि मूलं तरोः ॥80॥

(उभावाकर्णयतः)

**कलकण्ठः** - (स्वगतं)
भवत्वस्मदभिषङ्गादाक्षिप्य मज्जनगृहं नयामि ।
(प्रकाशं)
वयस्य, अतिक्रामति स्नानकालः । पश्य, परितो घटितघटीयन्त्रवान्तजालशीकर-शीतलाराममारुतसञ्चारसह्यातापोदयं समयम् ।

**मारुतः** - (विलोक्य) सखे,
यत्र क्षिपामि दृशमन्यदिदृक्षयाऽहं तत्राग्रतः स्फुरतिकेवलमेतदेव ।
तद्वक्त्रबिम्बमरुणाधरलोभनीयं ते लोचने तदलसालसमीक्षितश्च ॥

(साभिलाषं)

मन्येद्य श्रमवारिभिन्नलतिका[1] सेवेत वल्लीगृहा-
नालीनं करतालवृन्तपवनैः संवाह्यमाना शनैः ।
आहोस्विद्बिसभङ्गकङ्कणवती यन्त्राम्बुसिक्ताम्बरा
कर्पूरार्पणपाण्डरस्तनभरा वर्तेत धारागृहे ॥82॥

(निःश्वस्य)

पश्यामि चित्तफलके लिखितं सङ्कल्पशिल्पिना बालाम् ।
साकूतमीक्ष्यमाणां[2] स्मयमानमुखीं सविभ्रमं यान्तीम् ॥83॥

(प्रविश्य)

**प्रतिहारी** – कुमार, भट्टिणो सविहं पेसिओ भमरओ अह्मकेरादो णअरादो पच्छागओ कोमल-दुअल्ल[3]मुद्दीअचित्त फलअहत्थो दुवारम्मि वट्टइ । सो हि चित्तफलओ पाहुडीकओ सिंघल-द्दीवागएहिं णाविएहिं अह्माणं महाराअस्स ।

[कुमार, भर्तुस्सविधं प्रेषितो भ्रमरकः अस्मदीयान्नगरात् प्रत्यागतः कोमलदुकूल-मुद्रितचित्रफलकहस्तो द्धारे वर्तते । स हि चित्रफलकः प्राभृतीकृतः सिंहलद्वीपागतै-र्नाविकैरस्माकं महाराजाय ।]

---

1. तिलका $मु_1$    2. ईक्षमाणां, $म_1$, $म_2$, $मु_2$, $के_1$, $के_2$

3. ° भमरओ कुन्तलेसरणअरादो पच्चागओ कोमलदुअल °, $मु_1$
[भ्रमरकः कुन्तलेश्वरनगरात् प्रत्यागतः कोमलदुकूल°]

**कलकण्ठः** – ननु विशिष्टवस्तुदर्शनं प्रेषयति वत्सलो महाराजः ।

**मारुतः** – (जनान्तिकं)

सखे, किं चित्रान्तरदर्शनेन ?

(पश्यामि चित्तफलके इत्यादि पुनः पठति)

**कलकण्ठः** – (स्वगतं)

हन्त दुर्निवर्त्योऽयमत्यासङ्गः ।

(प्रकाशं)

चन्दनलते, स्नानाय उच्चलितो वयस्यः । मज्जनगृहमागच्छतु भ्रमरकः ।

(निष्क्रान्ताः सर्वे)[1]

उद्दण्डं रङ्गनाथः सुतमलभत यं रङ्गदेवी तथाम्बा
त्रैविद्येशो महर्षिर्निरवधिमहिमा यद्धिते जागरूकः ।
तस्य श्रीविक्रमाज्ञा बहुमतिरचिते मल्लिकामारुतेऽस्मिन्
प्रायादाद्यो रसार्द्रः[2] प्रकरणतिलके निष्कलङ्कोऽयमङ्कः ॥

****

---

1. इति श्रीमत्कविकुलतिलकेन श्रीसरस्वतीविक्रमार्कप्रमुखः बहुमतसाहित्य-वैभवेन श्री दण्ड्याचार्येण विरचिते श्रीविक्रमार्कराजन्यसत्कारभूते मल्लिकामारुते प्रथमोऽङ्कः । $मु_1$
2. आद्यः प्रागाद्दशानां, $मु_1$, प्रायादाद्यो रसभूः $म_2$

## ॥ द्वितीयोऽङ्कः ॥

(ततः प्रविशति चेटी)

**चेटी** – (सविषादं)

हद्धि बालिअं खु दूमाविआ सिरीसकोमलाङ्गी भट्टिदारिआ पवलेण दिणअरसंदावेण अहवा वम्महेण वा, जं मज्झह्ने चिंअ धाराघरगब्भणुमण्णा अज्जाणुह्मले वि आअवे ण णिग्गच्छइ । मण्णे तस्स एव्व महाभाअस्स वण्णणेण ण मुणइ गअंवि समअम् ।

(साशंसं)

अवि णाम सोवि एव्वं हवे । तदो किं णाम ण जअम् परोप्परसरिसाणुराअघडणसलाहणिज्जेण भअवआ रइवल्लहेण ।

(पुरतो विलोक्य)

एसा पिअसही महाभाअमारु आणुअरस्स भमरअस्स वल्लहा कंकेलिआ कङ्केलिपल्लव-पाडल[1]द्धुअल्लवासिणी किं वि हरिसपरवसा इओ एव्व आअच्छइ ।

[हन्त, बलवत्खलु दूना शिरीषकोमलाङ्गी भर्तृदारिका प्रबलेन दिनकरसन्तापेन अथवा

---

1. पाण्डु, मु,

मन्मथेन वा, यन्मध्याह्न एव धारागृहगर्भनिषण्णा अत्यनूष्मलेप्यातपे न निर्गच्छति । मन्ये, तस्यैव महाभागस्य वर्णनेन न जानाति गतमपि समयम् । (साशंसं) अपि नाम सोप्येवं भवेत् । ततः किं नाम न जितं परस्परसदृशानुरागघटनश्लाघनीयेन भगवता रतिवल्लभेन । (पुरतो विलोक्य) एषा प्रियसखी महाभागमारुतानुचरस्य भ्रमरकस्य वल्लभा कङ्केलिका कङ्केलिपल्लवपाटलदुकूलवासिनी किमपि हर्षपरवशा इत एवागच्छति ।]

(ततः प्रविशति कङ्केलिका)

**कङ्केलिका** - पिअसहीए णोमालिआए मुहाओ भट्टिदारिआए पउत्तिं जाणामि ।

[प्रियसख्या नवमालिकाया मुखाद्भर्तृदारिकायाः प्रवृत्तिं जानामि ।]

**प्रथमा** - (उपसृत्य)

सहि सअं एव्व किंवि किंवि मन्तअन्ती समीवट्ठिअं वि मं अणालपन्ती धावसि ।

[(उपसृत्य) सखि स्वयमेव किमपि किमपि मन्त्रयन्ती समीपस्थितामपि मामनालपन्ती धावसि ।]

**कङ्केलिका** – (विलोक्य)

सहि पवालिए, मा कुप्प । मए खु कज्जन्तर-क्खित्तहिअआ ण लक्खिआसि ।

[सखि प्रवालिके, मा कुप्य । मया खलु कार्यान्तराक्षिप्तहृदया नालक्षितासि ।]

**प्रवालिका** –सहि, मुहराएएण तक्केमि आअओ तुह पडिवइओ सो भमरओत्ति[1] ।

[सखि, मुखरागेण तर्कयामि आगतस्तव प्रतिपतिकस्स भ्रमरक इति ।]

**कङ्केलिका** – (सव्रीडस्मितं)

सहि सच्चं आअओ । अदो एव्व मह एदंहं समअं विलम्बो । ण मुक्कह्मि तेण चिरदिट्ठेण तेहिं तेहिं आलावेहिम् ।

[सखि, सत्यमागतः । अत एव मम एतावन्तं समयं विलम्बः । न मुक्तास्मि तेन चिरदृष्टेन तैस्तैरालापैः ।]

**प्रवालिका** – सहि, कहं णाम मुञ्चइ कङ्केलिअं भमरओ। अह कहिओ तेण मारुअस्स वावारो किं मुणइ किं भणइ किं कुणइत्ति ।

1. पडिवद्धको सो मारुओत्ति । [प्रतिबद्धकस्स मारुत इति ।] मु[1]

[सखि कथं नाम मुञ्चति कङ्केलिकां भ्रमरकः । अथ कथितस्तेन मारुतस्य व्यापारः किं जानाति, किं भणति किं करोतीति ।]

**कङ्केलिका** - एत्तिअं कहिअम् । अइसइअ लावण्णाए काएवि कण्णआए दीवंतरागअं चित्तफलए पडिच्छन्दं पुलोअन्तो सअंवि चित्तोप्पिओ विअ चिट्ठइत्ति ।

[एतावत्कथितम् । अतिशयितलावण्यायाः कस्या अपि कन्यकायाः द्वीपान्तरागतं चित्रफलके प्रतिच्छन्दं पश्यन् , स्वयमपि चित्रार्पित इव तिष्ठतीति ।]

**प्रवालिका** - (स्वगतं)

खुडिअं खु आसातन्तुणा । एसा खु तवस्सिणी तस्स पुडमदंसणे चिअ गिह्मुह्मताविआ विअ मुद्धमोरी अहिअदरं किलम्मइ ।

(प्रकाशं)

सहि किं तक्कज्जंतरं, जेण आक्खित्तहिअआसि ?

[(स्वगतं) खण्डितं खल्वाशातन्तुना । एषा खलु तपस्विनी तस्य प्रथमदर्शन एव ग्रीष्मोष्मतापितेव मुग्धमयूरी अधिकतरं क्लाम्यति ।

(प्रकाशं) सखि किं तत्कार्यान्तरं येनाक्षिप्त-हृदयासि ?]

**कङ्केलिका** –तेण हि एअं परिहिअं अम्बरं दाम्बरं दाऊण सम्माण अंतेण णिअस्सामिवअणाओ अह्माणं भट्टिदारिअं दट्ठुकामेण अग्गओ पउत्ति-विण्णाणे णिउत्तंह्मि ।

[तेन हि एतत्परिहितमम्बरं दत्वा सम्मानयता निजस्वामिवचनादस्माकं भर्तृदारिकां द्रष्टु-कामेन अग्रतः प्रवृत्तिविज्ञाने नियुक्तास्मि ।]

**प्रवालिका** – (स्वगतं)

एएण किंवि सासासं हिअअम् .।

(प्रकाशं)

सहि दुअल्लप्पसङ्गेण णिवेएमि । अज्ज रअणपइ-णामहेएण सत्थवाचक्कवट्टिणा भट्टिणा अमच्चस्स उवाअणीकअं बालाङ्गणाकुअकुम्मलसरसे दन्तकरण्डए[1] घडिअं दीवंतराणीअं एक्कं किमिहरवसणम् ।

[(स्वगतं) एतेन किमपि साश्वासं हृदयम् । (प्रकाशं) सखि दुकूलप्रसङ्गेण निवेदयामि ।

---

1. रत्तकरण्डए [रत्नकरण्डके], मु₁ 2. आवट्टि अं, मु₁

अद्य रत्नपतिनामधेयेन सार्थवाहचक्रवर्तिना भर्तुरमात्यस्योपायनीकृतं बालाङ्गनाकुच-कुड्मलसदृशे दन्तकरण्डके घटितं द्वीपान्तरा-नीतमेकं कौशेयम् ।]

**कङ्केलिका** – किं तुए दिट्ठम् ?

[किं त्वया दृष्टम् ?]

**प्रवालिका** – भट्टिणा आदिअं[1] अविघडिअ सअं एव्व देवीदंसणागआए भअवईए मन्दाइणीए हत्थेओप्पिअम् । दिज्जउ तुह वच्छाए मल्लिआएत्ति ।

[भर्त्रा गृहीतमविघट्य स्वयमेव देवीदर्शनागताया भगवत्या मन्दाकिन्या हस्ते अर्पितम् । दीयतां तव वत्सायै मल्लिकायै[2] इति ।]

**कङ्केलिका** – ता सुलहं खु तस्स दंसणं अह्माणम् । अह कहेहि को उण सम्बरअस्स कए राअणिबन्धस्स पसङ्गो ।

[तस्मात्सुलभं खलु तस्य दर्शनमस्माकम् । अथ कथय कः पुनः शम्बरकस्य कृते राजनिर्बन्धस्य प्रसङ्गः ।]

---

1. आवट्टिअं, मु$_1$ 2. वव्सायाः मल्लिकायाः, के$_2$, के$_4$ ।

**प्रवालिका** –पडिसमाहिओ खु सो भट्टिणा अमच्चेण– "मल्लिआए वरणिण्णए णाहं पमाणम्, अविउ भअवई कच्चाइणी एव्वेत्ति" ।

[प्रतिसमाहितः खलु स भर्त्रा अमात्येन– "मल्लिकाया वरनिर्णये नाहं प्रमाणं, अपि तु भगवती कात्यायन्येवेति" । ]

**काङ्केलिका** – (सनान्दं)

सुट्ठु पच्चक्खाओ हआसो संनरओ । कहेहि तुमं उण कुदो आअगच्छसि ?

[सुष्ठु प्रत्याख्यातो हताशश्शम्बरकः । कथय, त्वं पुनः कुतः आगच्छसि ?]

**प्रवालिका** – अहं खु अज्ज गोरीघराओ पडिणिउत्ता भट्टिदारिआ सूरल्लिसूरगहत्थीहिं कवट्टिअत्ति सुणिअ मुज्झन्तीए देवीए आणत्ता विइअवुत्तन्ता णिवट्टेमि ।

[अहं खलु अद्य गौरीगृहात्प्रतिनिवृत्ता भर्तृदारिका मध्याह्नसूरगभस्तिभिः कदर्थितेति श्रुत्वा मुह्यन्त्या देव्या आज्ञप्ता विदितवृत्तान्ता निवर्ते[1]।]

---

1. निवर्तयामि, अ₁

**कङ्केलिका** - जइ एव्वं कहेहि भट्टिदारिआ कहिं वट्टइत्ति ।

[यद्येवं कथय भर्तृदारिका कुत्र वर्तत इति ।]

**प्रवालिका** - फस्साणुमेअफलिहभित्तिप्पभाउक्किण्ण-चन्दमण्डलप्पणालीबोलीणजंतवारितुसारसो-सारज्झटिलोद्दाविआणलम्बिअमालइमालभारिणि गुप्फदग्धमोत्तिअखोअवालुआपुलिणलीणपास-कित्तिमसारिणी णीसरन्तचन्दणवारिपवाहेद्धारा-घरम्मिमुणालमेत्ताहरणा सीअलचन्दमणिसिला-घडिअविअड्डिउच्छङ्गविक्खरिए कुसुमसअज्जो करकलिअकेलीदलकेलीतलवेंटाए वोज्जन्तीए पिअसहीए णोमालिआए उवसिआ कालिन्दी-मुहाओ मलिआदाणउत्तंदं साअरं आअण्णअंती वट्टइ ।

[स्पर्शानुमेयस्फटिकभित्तिप्रभोत्कीर्णचन्द्र-मण्डलप्रणाल्यविक्रान्तयन्त्रवारितुषारसारजटिले कोमलजलार्द्रीवितानलम्बितमालतीमालभारिणि गुल्फदघ्नमौक्तिकक्षोदवालुकापुलिनलीन-पार्श्वकृत्रिमसारिणीनिःसरच्चन्दनवारिप्रवाहे धारागृहे मृणालमात्राभरण शीतलचन्द्रमणि-शिलाघटितवितर्दिकोत्सङ्गविस्तारिते कुसुम-शयनीये करकलितकदलीदलतालवृन्तया

वीजयन्त्या प्रियसख्या नवमालिकया उपासिता कालिन्दीमुखान्मालिकादान-वृत्तान्तं सादरमाकर्णयन्ती वर्तते । ]

(नेपथ्ये)

हला कालिन्दि !

(उभे आकर्णयतः)

**प्रवालिका** – सहि ! दाहिणेण केलीदीहिअं सुणीअइ कोइलपञ्चमकोमलो भट्टिदारिआए आलावो । मण्णे उज्झिअ धाराघरा मोत्तिअमण्डवं आअत्ति । ता ण जुत्तं णिवारिअपरिजणाए परिसरे ठाउम् ।

[ सखि दक्षिणेन केलीदीर्घिकां श्रूयते कोकिलपञ्चमकोमलः भर्तृदारिकाया आलापः । मन्ये उज्झितधारागृहा मौक्तिक-मण्डपमागतेति । तस्मान्न युक्तं निवारित-परिजनायाः परिसरे स्थातुम् ।

(इति निष्क्रान्ते)

॥ प्रवेशकः ॥

(ततः प्रविशति उत्कण्ठितोपविष्ठा मल्लिका कालिन्दी नवमालिका च)

**मल्लिका** - तदो ? [ततः ?]

**कालिन्दी** - तदो अ तेन महाभाएण साणुणअं सप्पणअं एव्वं णाम आणत्ता ण्हाणोवअरणतुवरंतवारसुन्दरी-करोदंचिअकंचणकुम्भपिञ्जरिआअवेण दुवारेण णिग्गामिअ आअअह्मि ।
[ततश्च तेन महाभागेन सानुनयं सप्रणयमेवं नामाज्ञप्ता स्नानोपकरणत्वरमाणवारसुन्दरी-करोदश्चितकाश्चनकुम्भपिञ्जरितातपेन द्वारेण निर्गत्यागतास्मि ]

**मल्लिका** - (साभिलाषं, स्वगतं)
सहि सहजे मालिए धण्णा तुमं सलाहणिज्जसोहग्गासि । एक्कमुहुत्तजाआणं वि अह्माणं पिहं पिहं एव्व कम्मफलम् । जं एक्कपए चिअ ईसि विहसन्तताविच्छसामल-कोमलङ्गस्स तस्स णीसंककण्ठग्गहभाअणं संवुत्तासि ।

(प्रकाशं)

दिट्टिआ ण कओ महाभाएण पुडमप्पणअभङ्गो ।
[(साभिलाषं, स्वगतं) सखि, सहजे मालिके, धन्या त्वं श्लाघनीयसौभाग्यासि । एक-मुहूर्तजातयो रप्यावयोः पृथक्पृगेव कर्मफलम् । यदेकपद एव ईषद्विकसत्तापिच्छश्यामल-कोमलाङ्गस्य तस्य निःशङ्ककण्ठग्रहभाजनं संवृत्तासि । (प्रकाशं)दिष्ट्या न कृतो महाभागेन प्रथम-प्रणयभङ्गः ।]

**कालिन्दी** - जा देण णिअकन्धराओ अवरोविअ सहत्थेण दिण्णा सरअतारोलिपंधरो सहओ हारो। सो एसो।

[यस्तेन निजकन्धरादवरोप्य स्वहस्तेन दत्तश्शरत्तारापालिपाण्डरस्सहजो[1] हारः। स एषः।]

(इति मल्लिकायाः कण्ठे हारमामुञ्चति)

**मल्लिका** - (सहर्षरोमाञ्चं, स्वगतं, संस्कृतमाश्रित्य)

तानालीजन[2]दत्तशीतलविधीनारभ्य तद्धर्शनात्

या मन्ये वडवानलानिव वपुर्दाहेन मोहाकुला।

सा जाताऽस्मि[3] तदङ्गसङ्गसुभगे हारेऽधिरूढस्तने

सर्वाङ्गे स्थगितेव साम्प्रतमिव[4] सौधाकरैर्मण्डलैः ॥1॥

**नवमालिका** - (जनान्तिकं)

सहि कालिन्दि, जाहेच्चिअ विसट्ट-कन्दोट्टदलदामदीहरसिद्धेहिं दिट्टिपाएहिं पच्चक्खिआ सो महाभाओ। तहप्पहुदि अणुक्खणवड्ढतेण अणङ्ग-रूवेण केणवि अणलेण बलिअं किलम्मइ भट्टिदारिआ। पेच्छ। ण किलिकिञ्चइ मञ्जुवअणेसु पञ्जरअसेसु। ण णिलुक्कइ सुलहमलअमारुअं कीलापासाअम्। ण गुञ्जइ णम्मवक्केसु सहअरीसल्लावेसु। डुण्डुल्लइ ण वरं मुणालघडिअहाराधाराप्परेसु। वेढइ

---

1. तारानाथवाण्याः, $अ_2$ 2. कर, $मु_1$, $मु_2$, $म_1$, $म_2$, $अ_1$, $त_1$, $त_2$, $मै_{1-4}$, $के_{1-2}$
3. om अस्मि, $मु_1$ 4. अहो, $मु_1$

विहाडन्तमालईदलवीसालिएसु पल्लवसअणिज्जेसु ।
गुम्मइ पौम्मिणीदलधवित्तसञ्चारिएहिं मारुएहिम् ।
हुल्लइ पुणो पुणो विवखिआओ वअणाओ । मुञ्चइ
खणे खणे णिुअ णिग्गमं णीसासम् । अज्ज उण–

(संस्कृतमाश्रित्य)

कलयति तदुदन्ताकर्णनेषु प्रसक्तिं
कमपि कमपि[1] मध्ये निश्चला ध्यायतीव ।
अपि च वहति[2] हारस्पर्शमात्रेण बाला
पवनचलकदम्बोद्भेदतुल्यामवस्थाम् ॥ 2॥

ता लज्जालुआ ण भणइ अप्पणव्वव [3]अप्पिल्लं
मअणावेसम् । अह्मो उण वाअइस्सामो,
मित्तसंकामिओ खु सज्झो हौज्ज संदावो ।

(मल्लिकां प्रति)

सहि, कालिन्दी भणइ, रञ्जणलक्खणा राआणो ।
सेवालक्खणो परिअणो । पेम्मलकखणाइ मिहुणाइ ।
वीसंभलक्खणाइ मित्ताइ । ता सहपंसुकीलणाओ आरहिअ
अविभत्त सुहदूहे जणे ण जुत्ता अवहित्थत्ति । ता कहेहि मणोभवम्।
संविभाएण लहुकरेहि संदावम् ।

[सखि कालिन्दि, यदैव दलदुत्पलदल-
दामदीर्घतरस्निग्धैर्दृष्टिपातैः प्रत्यक्षितस्स महाभागः,
तदा प्रभृत्यनुक्षणवर्धमानेन अनङ्गरूपेण
केनाप्यनलेन बलवत्क्लाम्यति भर्तृदारिका । पश्य,

---

1. किमपि किमपि, $त_1$, $मै_3$, $के_2$ 2. हरति, $के_2$
3. अप्पणेव्व अवलम्बिणी [आत्मनैवावलम्बिनी], $मु_1$ ।

न रमते मञ्जुवचनेषु पञ्जरशुकेषु। न लीयते सुलभ-मलयमारुतं क्रीडाप्रासादम्।न हसति नर्मवक्रेषु सहचरी-सल्लापेषु। भ्रमति केवलं मृणालघटितहारा धारागृहेषु। वेष्टते विघटमानमालतीदलमिश्रेषु पल्लवशयनीयेषु। मुह्यति पद्मिनीदलधवित्रसञ्चारितैर्मारुतैः। स्खलति पुनःपुन-र्विवक्षिताद्वचनात्। मुञ्चति क्षणे क्षणे निभृतनिर्गमं निश्वासम्। अद्य पुनः -

(संस्कृतमाश्रित्य)

कलयति तदुदन्ताकर्णनेषु प्रसक्तिं
कमपि कमपि[1] मध्ये निश्चला ध्यायतीव।
अपि च वहति[2] हारस्पर्शमात्रेण बाला
पवनचलकदम्बोद्भेदतुल्यामवस्थाम् ॥ 2॥

तस्माल्लज्जावती न भणति स्वयमेवात्मभवं मदनावेशम्। वयं पुनर्वाचयिष्यामः। मित्रसङ्क्रामितः खलु सह्यो भविष्यति सन्तापः। सखि, कालिन्दी भणति, "रञ्जनलक्षणा राजानः, सेवालक्षणः परिजनः, प्रेमलक्षणानि मिथुनानि, विस्रम्भलक्षणानि मित्राणि"। तस्मात् सहपांसुक्रीडनादारभ्य अविभक्त-सुखदुःखजनेन युक्ता अवहित्थेति। तस्मात्कथय मनोभवम्। संविभागेन लघूकुरु सन्तापम्।]

**मल्लिका** - (स्वगतं)

हद्धि, ण सक्कुणोमि पुणो पुणो वि वत्तुकामा, वीलाणिअंतिअजीहा किंवि आअक्खिउम्। तहइ कहंवि कहइस्सम्।

---

1. किमपि किमपि, $त_1$, $मै_3$, $के_2$ 2. हरति, $के_2$

(प्रकाशं)

सहि, तस्स महाभाअस्स . . .

[(स्वगतं) हन्त न शक्नोमि पुनः पुनरपि वक्तुकामा व्रीडानियन्त्रितजिह्वा किमप्याख्यातुम् । तथापि, कथमपि कथयिष्ये । (प्रकाशं) सखि, तस्य महाभागस्य] . . . (इत्यर्धोक्ते लज्जया बाष्परुद्धकण्ठी विरमति)

**नवमालिका** – (सकरुणं)

सहि अलं पुणरुत्तेण वअणेण । कहिअं एव्व णिदाहकरकिरणमिलाअन्तसिरी-सदलदअणिज्जेहिं अङ्गेहिम् । अवि अ सहि सफलो खु जम्मणो तस्स महाभाअस्स जुआणस्स। जस्सिं तुमं लच्छिव्व पुरिसुत्तमे पोम्मिणिव्व किरणमालिणि अणुराअं बन्धेसि ।

[(सकरुणं) सखि, अलं पुनरुक्तेन वचनेन । कथितमेव निदाघकरकिरणम्लायच्छिरीष-दलदयनीयैरङ्गैः । अपि च सफलं खलु जन्म तस्य महाभागस्य यूनः यस्मिन् त्वं लक्ष्मीरिव पुरुषोत्तमे पद्मिनीव किरणमालिन्यनुरागं बध्नासि ।]

**मल्लिका** – (सनिश्वासं)

सहि सोअणिज्जो खु सो अणुराओ । जो ण परोप्परो ।

[(सनिश्वासं) सखि शोचनीयः खलु सः अनुरागः यो न परस्परः ।]

**कलिन्दी** –सहि मल्लिए, मा एव्वं भण । सो वि सरिसाणुराअघडणवाउडेण भअवंतेण वम्महेण गोअरीकओ अमोहाणं विसिहाणम् । पेच्छ–

[सखि मल्लिके मैवं भण । सोऽपि सदृशानुरागघटन-व्यापृतेन भगवता मन्मथेन गोचरीकृतोऽमोघानां विशिखानाम् । पश्य –]

(संस्कृतमाश्रित्य)

तस्यापि बाष्पकलमक्षि वपुर्विवर्णं
म्लानां मुखं परिसरे प्रियमित्रमेव ।
मद्वक्त्रतः[1] तव गुणानभिश्रृण्वतश्च
प्रत्यक्षरं पुलकशालि कपोलमूलम् ॥ 3 ॥

**मल्लिका** – कालिन्दि, जाणामि एआरिसा खु सहीजणस्स आसासणविप्पलम्भा ।
[कालिन्दि, जानामि एतादृशाः खलु सखीजनस्य आश्वासनविप्रलम्भाः ।]

**नवमालिका** – अत्थु सो विप्पलम्भो । एअंवि किं अवलवसि । जं पुडमदंसण विह्मआणंद वित्थारिउत्थाणतरन्त तारअसारोअरेहिं ईसि तिरच्छि जिह्मिआवंगरिङ्खणतरङ्गिअविब्भमेहिं लोअणेहिं चन्दिमालिङ्गिअदुद्धसाअरतरलधवल-मुद्धमहुरेण किरणसन्ताणेण अङ्गमङ्गम्मिं ह्णाविआसि ।

(सस्मितं)

---

1. किञ्च हिया, मु,

अह वा मरकअ गब्भसिणिद्धसरीरस्स तस्स दंसणसंभमेण ण जाणिओ एव्व तक्कालजणिओ उत्तंदो। जा तुमं भअवईए मन्दाइणीए वन्दणाओवि पमत्ता समुआआर-कखलण भीरुआए मए करङ्गुलिचलणेण कहं वि अप्पाणं जाणाविआसि ।

[अस्तु स विप्रलम्भः । एतदपि किमपलपसि यत्प्रथमदर्शनविस्मयानन्दविस्तारितोत्तानतरतारका-शारोदराभ्यां ईषत्तिर्यग्जिह्मितापाङ्गरिङ्खणतरङ्गित-विभ्रमाभ्यां लोचनाभ्यां चन्द्रिकालिङ्गितदुग्धसागरतरलधवल-मुग्धमधुरेण किरणसन्तानेन अङ्गमङ्गं, स्नापितासि । (सस्मितं) अथवा मरकतगर्भस्निग्धशरीरस्य तस्य दर्शनसंभ्रमेण न ज्ञात एव तत्कालजनितो वृत्तान्तः । या त्वं भगवत्या मन्दाकिन्या वन्दनादपि प्रमत्ता समुदाचारस्खलनभीरुतया मया कराङ्गुलिचलनेन कथमप्यात्मानं ज्ञापितासि ।]

**मल्लिका** –(सविलक्षस्मितं) सहि ठाणे उवालद्धह्मि ।

[सखि स्थाने उपालब्धास्मि ।]

**कालिन्दी** – सहि सव्वहा मा दे अणासासणं होदु। णं तेण पुडमं अप्पा समप्पिओ, पच्छा हारो ।

[सखि सर्वथा मा ते अनाश्वासनं भवतु। ननु तेन प्रथमं आत्मा समर्पितः, पश्चाद्धारः ।]

**नवमालिका** – कालिन्दि, दाणक्कमेण पडिगहिअं पिअसहीए वि। णं पुढमं महाभाओ हिअअं आरोविओ णवरिअ हारो ।

[कालिन्दि, दानक्रमेण प्रतिगृहीतं प्रियसख्यापि । ननु प्रथमं महाभागो हृदयमारोपितः, अनन्तरं च हारः ।]

**मल्लिका** – (सहर्षं, हृदयं विलोक्य)

महाभाअ, अच्चेरं ते सअलजणचित्तबलामोडिहरणकिवणस्स उआरत्तणं वि । जेण तिहुवणेक्कमण्डणं अणग्घो अप्पा वि दिण्णो । ता जइ हारो विअ अत्ताणं ण दंसेसि उक्कण्ठिआणं मह णअणाणं मोसा देवअणं होज्ज ।

[(सहर्षं, हृदयं विलोक्य) महाभाग, आश्चर्यं ते सकलजनचित्तबलात्कारहरणकृपणस्योदारत्वमपि । येन, त्रिभुवनैकमण्डनं अनर्घआत्मापि दत्तः । तस्माद्यदि हार इव आत्मानं न दर्शयसि, उत्कण्ठितयोर्मम नयनयोर्मृषा ते वचनं भविष्यति।]

**नवमालिका** – (जनान्तिकं)

कालिन्दि, एसा खु तवस्सिणी हिअअट्ठिअं सच्चं एव्व मण्णेइ । किलिसं दाव ।

(प्रकाशं)

सहि, मल्लिए! मण्णे किं एसा मह दंसणं बहुमण्णेइ आदु णवेति विइइच्छन्तो हिअए चिअ णिऊढोत्ति ।

[(जनान्विकं) कालिन्दि, एषा खलु तपस्विनी हृदयस्थितं सत्यमेव मन्यते । क्रीडिष्यामि तावत् । (प्रकाशं) सखि मल्लिके, मन्ये किमेषा मम दर्शनं बहु मन्यते । अथवा न वेति विचिकित्सन् हृदय एव निगूढ इति ।]

**मल्लिका** – (स्वगतं)

जइ एव्वं उअअंतेण छुहाअरेण परिक्खणिज्जा खु कुमुइणी । अच्छ मह ण जाणासि किं तस्सअ-दंसणुत्थं कुऊलग्गिगब्भवासणिव्विसेसं अवत्थम् ।

[यद्येवं उदयमानेन सुधाकरेण परीक्षणीया खलु कुमदिनी । अद्य मम न जानासि किं तस्यादर्शनोत्थां कुकूलाग्निगर्भवासनिर्विशेषामवस्थाम् ।]

(संस्कृतमाश्रित्य)

आधिः कश्चन दारुणो वितनुते[1] तद्दर्शनोपक्रमं[2]
मूर्च्छलां कलुषीकरोति कलुषग्रामं विमोहो महान् ।
धारावाहि तदेकगाहि किमपि ज्ञानाद्वयं तायते
किं वाचा हृदयस्थितेन तदिदं तेनैव विज्ञायते ॥4॥

**नवमालिका** – (जनान्तिकं)

कालिन्दि ! पेच्छ ! रमणिज्जो भट्टिदारिआए अणुराअप्पआरो ।

(संस्कृतमश्रित्य)

पातयति हृदयदेशे प्रियजनगर्भे पुनःपुनर्मुग्धा ।
वर्णितमदनातङ्का बाष्पवतीं भावमन्तरां दृष्टिम् ॥5॥

(सविषादं)

का एत्थ पडिवत्ती एआएउण धीरप्पद्धंस-सहुप्पण्णो एसो मअणावेसो ।

---

1. वितपते, $मु_2$ । 2. तद्दर्शनादद्य मां, $मु_1$ ।

[(जनान्तिकं) कालिन्दि, पश्य, रमणीयो भर्तृदारिकाया अनुरागप्रकारः । (संस्कृतमाश्रित्य)

पातयति हृदयदेशे प्रियजनगर्भे पुनः पुनर्मुग्धा।
वर्णितमदनातङ्का बाष्पवतीं भावमन्तरां दृष्टिम् ॥ 5 ॥

(सविषादं) काऽत्र प्रतिपत्तिः, एतस्याः पुनः धैर्यप्रध्वंससहोत्पन्न एष मदनावेशः । (प्रकाशं) सखि, नन्वेष भावनामारुतः, यो हृदये तिष्ठति।]

**मल्लिका** - (सलज्जं)

हद्धि, किं भावणामारुओ एव्व ? अहं खु मुद्धा तक्केमि सच्चो एसोत्ति ।

(सनिश्वासं)

अवि णाम दक्खिस्सं अकलङ्कहरिणङ्कसुन्दरं पुणो वि तस्स मुहबिम्बम् ।

[(सलज्जं) हन्त, किं भावनामारुत एव ? अहं खलु मूढा तर्कयामि सत्य एष इति । (सनिश्वासं) अपि नाम द्रक्ष्याम्यकलङ्कहरिणाङ्क-सुन्दरं पुनरपि तस्य मुखबिम्बम् ।]

**नवमालिका** - सहि मा खु एव्वं काहला होहि । णं पडिच्छन्ददंसणाइहिं सुलहं मणविणोदणं उक्कण्ठिअस्स जणस्स ।
[सखि, माखल्वेवं कातरा भव । ननु प्रतिच्छन्द-दर्शनादिभिः सुलभं मनोविनोदनं उत्कण्ठितस्य जनस्य ।]

**कालन्दी** - सच्चं मन्तेइ णोमालिआ । णं पिअजणुक्कण्ठा तत्तिल्लिचित्ताणं तग्गुणवण्णणं तब्भूसणलाहो तप्पडिच्छन्ददंसणंति महन्तो ओलम्बो ।

[सत्यं मन्त्रयते नवमालिका । ननु प्रियजनोत्कण्ठा तत्परिचितानां तद्गुणवर्णनं तद्भूषणलाभः तत्प्रतिच्छन्ददर्शनमिति महानवलम्बः ।]

**मल्लिका**-सहि, कहं णाम लिहिज्जउ करअलेण । पआ वइणोपि सावहाणमाणससग्गसंवाइ सुन्दरस्स तस्स पडिच्छन्दो । अहवा जहसत्ति लिहिस्सम् । आणेहि चित्तसालाओ सवण्णिअं चित्तफलअम् ।

[सखि, कथं नाम लिख्यतां करतलेन । प्रजापतेरपि सावधानमानससर्गसंवादी सुन्दरस्य तस्य प्रतिच्छन्दः । अथवा यथाशक्ति लेखिष्यामि। आनय चित्रशालायाः सवर्णिकं चित्रफलकम् । ]

**नवमालिका** - तह । [तथा ।]

(इत्युत्थातुमिच्छति)

(प्रविश्य)

**प्रतिहारी** - एसा दन्तकरण्डअहत्था भअवईए मन्दाइणीए पिअसीसा सारसिआ ।

[एषा दन्तकरण्डकहस्ता भगवत्या मन्दाकिन्याः प्रियशिष्या सारसिका ।]

**मल्लिका** - कीस अविलम्बिअं ण पविसइ ?

[कस्मादविलम्तिं न प्रविशति ?]

(निष्क्रान्ता प्रतिहारी)

हला अलाहि खणं चिट्ठ । [सखि, अलं क्षणं तिष्ठ ।]

(ततः प्रविशति सारसिका)

**सारसिका**-कहिअं भअवईए मल्लिआउत्तन्तवण्णणे चिन्दिअस्स एअस्स दिव्वम्बरस्स आअमणं[1] । अब्बो, रक्खसहत्थगअत्ति सुणिअ वेवंति मे अङ्गइम् ।

(सस्मरणं) [1]

कहं ण दिट्ठो सीमन्तमणी । जस्स परस्समत्तेण मुज्झन्ताणं सण्णालाहो होइत्ति ओदिट्ठं भअवईए ।

(अग्रतो विलोक्य, सानन्दं)

एसा खु रुअरुइआ गहिआ अग्गओ वट्टइ मल्लिआ ।

(निर्वर्ण्य)

हुं मालापए हारो अहिसित्तो । सच्चं कहिअं भअवईए मल्लिआए आआरेहिं कहिओ एव्व सरविआरोत्ति ।

1. add (सरोमाञ्चं). $त_{1-2}$

[कथितं भगवत्या मल्लिकावृत्तान्तवर्णनं, चिन्तितस्य एतस्य दिव्याम्बरस्यागमनम् । हन्त, राक्षसहस्तगतेति श्रुत्वा वेपन्ते मेऽङ्गानि । (सस्मरणं) कथं न दृष्टं सीमन्तमणिः, यस्य स्पर्शमात्रेण मुह्यतां संज्ञालाभो भवतीत्युपदिष्टं भगवत्या । (अग्रतो विलोक्य, सानन्दं) एषा खलूत्कलिका गृहीता अग्रतो वर्तते मल्लिका । (निर्वर्ण्य) हुं, मालापदे हारोऽभिषिक्तः । सत्यं कथितं भगवत्या मल्लिकाया आकारैः कथित एव स्मरविकार इति ।]

(संस्कृतमाश्रित्य)

लुलितमधुरैः सेयं सद्यस्स्फुटद्दलकेतकी-
कपिशधवलैर्वक्त्येवाङ्गैः स्मराभिभवं नवम् ।
भवतु सफलः सर्गक्लेशो विधातुरनुत्तमः
समुचितवरप्राप्तिप्रीत्या रमन्तु च बान्धवाः ॥ 6 ॥

**मल्लिका** – (स्वगतं)

हन्त, दुल्लहजणाहिणिवेसिणी मह पच्चासा ।
[हन्त दुर्लभजनाभिनिवेशिनी मम प्रत्याशा ।]

**सारसिका** –

पुण्णा भअवईए आसीहिम् ।
[ पूर्णा भगवत्या आशीर्भिः ।]

**मल्लिका** – (सानन्दं) का ? [का ?]

**सारसिका** – णं तुमं एव्व । [ननु त्वमेव ।]

**मल्लिका** – एहि सारसिए ! किं ण आसीअइ ?
[एहि सारसिके ! किं न आस्यते ! ]

**सारसिका** – एक्कसरिअं गन्तव्वं ति । एक्कव्व वट्टइ भअवई । पेसिअं अ एदं अम्बरगब्भिणं दन्तकरण्डअम् ।
[झटिति गन्तव्यमिति । एकैव वर्तते भगवती । प्रेषितं च एददम्बरगर्भितं दन्तकरण्डकम् ।]

(मल्लिका सबहुमानमादत्ते)

**नवमालिका** – सहि, कहिअं एअस्स आअमणं धाराघरम्मि आगआए पवालिआए भट्टिणो अमच्चस्स रअणपइणा सीहलद्दीवाणीअं पाहुडीकअंति ।
[सखि, कथितमेतस्यागमनं धारागृहे आगतया प्रवालिकया भर्तुरमात्यस्य रत्नपतिना सिंहलद्वीपानीतं प्राभृतीकृतमिति । ]

**सारसिका** – सच्चं एअं एव्व । [ सत्यमेतदेव ।]

**मल्लिका** – अज्ज कहिं वट्टइ भअवई ।
[अद्य कुत्र वर्तते भगवती ?]

**सारसिका** –अन्तेउरम्मि देवीए सविहे अमच्चस्स मुहाओ संबरअसम्बन्धं किंवि सुण्णन्ती वट्टइ ।
[अन्तः पुरे देव्याः सविधे अमात्यस्य मुखात् शम्बरकसम्बन्धं किमपि शृण्वती वर्तते ।]

**नवमालिका** – (अपवार्य)
मण्णे, तं एव्व कोलीणं भट्टिदारिअं सम्बरओ राअमुहेण पत्थेइत्ति ।

[मन्ये, तदेव कौलीनं भर्तृदारिकां शम्बरको राजमुखेन प्रार्थयत इति ।]

**मल्लिका** – (सजुगुप्सं, स्वगतं)
ऊ, कहं मं अण्णो जणो पत्थेइ ?
[ऊ, कथं मां अन्यो जनः प्रार्थयते ?]

**सारसिका** – ता अणुमण्णेउ मं पिअसही ।
[तस्मादनुमन्यतां मां प्रियसखी ।]

**मल्लिका** – सहि ण पारेमि वारिउं भअवईए सविहं गच्छसिति ।
[सखि न शक्नोमि वारयितुं भगवत्यास्सविधं गच्छसीति ।]

(निष्क्रान्ता सारसिका)

**मल्लिका** – सहि, आणेहि एण्हिं चित्तफलअम् ।
[ सखि, आनय इदानीं चित्रफलकम् ।]

**नवमालिका** –भअवईए पेसिअं अम्बरं दट्ठूण झत्ति आणइस्सामि

(इति करण्डकमादाय विघटय्य
दुकूलमङ्गुल्यग्रेणोद्धरति, सविस्मयं)[1]

अह्महे उब्भिज्जान्तबालकदलीगब्भपल्लवणि-व्विसेसमाउक्कोए अस्स फस्सो ।

---

1. ° दुकूलमुद्धरति, सस्मितं, मु,

(सहर्षं)

कालिन्दि, भट्टिदारिआ सिहणलालिआए मालिआए विअ परिमलो एअस्स ।

(विस्तारयति)

[भगवत्या प्रेषितमम्बरं दृष्ट्वा झटित्यानयिष्यामि ।

(इति करण्डकमादाय विघटय्य दुकूलमङ्गुल्यग्रेणोद्धरति, सविस्मयं)

अहो उद्भिद्यत्बालकदलीपल्लवनिर्विशेषमृदुत्वः एतस्य स्पर्शः । (सहर्षं) कालिन्दि, भर्तृदारिकाया स्तन-लालिताया इव परिमल एतस्य। (विस्तारयति)]

**कालिन्दि** - (विलोक्य, सकौतुकं)

सहि, वेरन्ते चित्तं वि दीसइ ।

[(विलोक्य, सकौतुकं) सखि, पर्यन्ते चित्रमपि दृश्यते ।]

**नवमालिका** - (निर्वर्ण्य)

ण केव्वलं चित्तमात्तं पिअसहि, पेच्छ पेच्छ, अअण्णदीहरेहिं णअणेहिं महाभाओ एव्व आलिहिओ ।

[न केवलं चित्रमात्रं प्रियसखि, पश्य पश्य, आकर्णदीर्घाभ्यां नयनाभ्यां महाभाग एवालिखितः ।]

**मल्लिका** - (सविस्मयानन्दाभिलाषं, आलोक्य)

सहि णोमालिए सच्चं सो एव्व ।

(संस्कृतमाश्रित्य)

तद्वक्त्रं श्रवणान्तचुम्बिनयनं सा बन्धुरा कन्धरा

तावाजानुविलम्बिनौ मरकतस्तम्भाभिरामौ भुजौ।

(सस्मितं)[1]

तद्वक्षो विपुलं स एष धवलो[2] हारोप्यमुष्मिन्नहो

तावूरू करिराजहस्तरुचिरौ ते एव ताम्रे पदे ॥ 7 ॥

(निर्वर्ण्य)

हला एतिओ एव्व भेदो गअणिमेसेहिं अच्छीहिं एसो दिव्वपुरुसो सो माणसोत्ति ।

[सखि नवमालिके, सत्यं स एव । (संस्कृतमाश्रित्य)

तद्वक्त्रं श्रवणान्तचुम्बिनयनं सा बन्धुरा कन्धरा

तावाजानुविलम्बिनौ मरकतस्तम्भभिरामौ भुजौ ।

तद्वक्षो विपुलं

(सस्मितं)

स एष धवलो हारोप्यमुष्मिन्नहो

तावूरू करिराज हस्तरुचिरौ ते एव ताम्रे पदे ॥7॥

(निर्वर्ण्य)

सखि, एतावानेव भेदः, गतनिमेषाभ्यां अक्षिभ्यां एष दिव्यपुरुषः स मानुष इति ।]

**नवमालिका** [3] – (विहस्य)

मुद्धे चित्तगएवि किं णिमेसोत्ति

[(विहस्य)मुग्धे चित्रगतेपि किं निमेष इति ।]

**मल्लिका** – किं ण सच्चो एसो । हद्धि चित्तगए विअ चित्तगएवि भमामि ।

---

1. सविस्मयं $म_2$ 2. सहोजो, $मु_1$

3. $मु_1$ omits the following dialogues, till होइ; see next page.

[किं न सत्य एषः? हन्त चित्तगत इव चित्रगतेऽपि भ्रमामि । ]

**कालिन्दी** – सहि णोमालिए णं एसो चित्तविण्णसगुणो जेण सच्चपच्चओ होइ ।[1]

[सखि, नवमालिके, नन्वेष चित्रविन्यासगुणः, येन सत्यप्रत्ययो भवति । ]

**नवमालिका** – (चित्रं निवर्ण्य)

सहि एसा भट्टिदारिआए हत्थविण्णाणवेअत्थिं अणुहरइ रमणिज्जा णिम्माणलेहा ।

[(चित्रं निर्वर्ण्य) सखि, एषा भर्तृदारिकाया हस्तविज्ञानवैदग्धीमनुहरति रमणीया निर्माण-लेखा । ]

**मल्लिका** – (सोत्कण्ठास्मरणं स्वगतम् )

पच्चभिण्णा विअ एअस्सिम् ।

(पुनर्निर्वर्ण्य)

सहीओ पेच्छह पेच्छह। एअस्स काएवि महाभाअहेआए अवरिं सुइराारूढगाढुक्कण्ठा पिसुणो आआरो ।

[(सोत्कण्ठास्मरणं स्वगतम् )प्रत्यभिज्ञैवेस्मिन् । (पुनर्निर्वर्ण्य) सख्यौ, पश्य तं, पश्य तम् । एतस्य कस्या अपि महाभागधेयाया उपरि सुचिरारूढगाढोत्कण्ठापिशुनः आकारः ।]

---

1. मु$_1$ omits upto होइ ।

(संस्कृतमाश्रित्य)

वर्णान्तरेण बिसकाण्डसहोदरेण
स्पृष्टं शरीरमकठोरकरीरमुग्धम् ।
प्रम्लायतीव किमपि श्वसितानिलेन
बिम्बाधरोपि कुरुविन्ददलाभिरामः ॥ 8 ॥

(सनिर्वेदं)

हन्त, मूलम्मि लूणो सहीवअणसलिलसित्तो पच्चसालदाङ्कुरो । धण्णा खु सा पुण्णभाइणी जाह सोहग्गं[1] महाभाओ बालचन्दअलापण्डरेहिं अङ्गेहि अक्खरं कहेइ । णिक्कलुणआ अ सा जा इमस्सिं एरिसावत्थे उदासीणा होइ।

(मदनपीडां नाटयन्ती, सखेदं, निश्वस्य)

मुद्धहिअअ, कीस अण्णसंकन्तमाणसे जणे पुणो पुणो वि णिवडसि ? माणहणं मण्ण अज्ज वि णिप्फलमणोरहवसंवअस्सए तुह कहिं णु गआ तारिसी लज्जा । अहवा मम्महो एव्व उवालम्भणिज्जो । जेण तुमं एव्व तिक्खतिक्खेहिं वाणेहिं[2] तस्सिं जणे दिढं कीलिअंसि ।

(आकाशे)

भअवं अवलाजणदंसिअ भुअसुण्डीर मम्मह भीरुओसि तुमं णअरग्घलदीग्घ भुअदण्डमण्डणादो महाभाआदो जेण पलआणलभीषणा मह हिअअं विप्पअंता वि तहिंचि ठिए तुह रूवलच्छीकुम्भीलेण तस्सिं जणे ण णिवडन्ति तुज्झ मग्गणा । अहवा

1. जा एसो, मु$_1$  2. सरेहिं, मु$_1$

णिवडन्ति अ जेण का एवि अट्ठे मुद्धमहुरपण्डर-गण्डमूलो लक्खिज्जइ एसो ।

(इति सास्रं निर्वर्णयति)

[(सनिर्वेदं)हन्त मूले लूनः सखीवचन-सलिलसिक्तः प्रत्याशालताङ्कुरः । धन्या खलु सा पुण्यभागिनी,यस्यास्सौभाग्यं एष महाभागो बालचन्द्रकलापाण्डरैरङ्गैरनक्षरं कथयति । निष्करुणा च सा,या अस्मिन्नीदृशावस्थे उदासीना भवति । (मदनपीडां नाटयन्ती, सखेदं, निश्वस्य) मुग्धहृदय, कस्मादन्यसङ्क्रान्तमानसे जने पुनः पुनरपि निपतसि ? मानधनं मन्य अद्यापि निष्फलमनोरथवशंवदस्य तव कुत्रानुगता तादृशी लज्जा? अथवा मन्मथ एवोपालम्भनीयः। येन त्वमेवं तीक्ष्णतीक्ष्णैर्बाणै-स्तस्मिन्जने दृढं कीलितमसि।(आकाशे)भगवन्, अबलाजनदर्शित भुजशौण्डीर्य ! मन्मथ ! भीलुकोऽसि त्वं नगरार्गदीर्घभुजदण्डमण्डनात् तस्मात् महाभागात् । येन प्रलयानलभीषणाः मम हृदयं भस्मयन्तोऽपि तत्रैव स्थिते तव रूपलक्ष्मीकुम्भीलके तस्मिन् जने न निपतन्ति तव मार्गणाः । अथवा निपतन्ति च येन कस्याप्यर्थे मुग्धमथितपाण्डरगण्डमूलो लक्ष्यत एषः।]

**कालन्दी** – (सकरुणं, जनान्तिकं)

अहो एदाए वेम्मादिसओ ।

[अहो एतस्याः प्रेमातिशयः ।]

(संस्कृतमाश्रित्य)

चित्रदयितेऽपि तैस्तैराकारैरन्यसङ्गशङ्किन्याः ।
अस्या रोषविषादव्रीडोत्कण्ठापरिप्लुते नयने ॥9॥

(प्रकाशं)

सहि, जइ अवसिअं विवक्खिअं वअणं ता अहं वि किंवि भणिस्सम् ।

[सखि, यद्यवसितं विवक्षितं वचनं, तदा अहमपि किमपि भणिष्यामि ।]

**मल्लिका** – (स्वगतं)

मण्णे एसा सिणेहमेत्तदंसिणी पुणोवि आसासणे पवट्टइ ।

(प्रकाशं)

कालिन्दि, किं विअ ?

[(स्वगतं) मन्ये एषा स्नेहमात्रदर्शिनी पुनरप्याश्वासने प्रवर्तते। (प्रकाशं) कालिन्दि, किमिव ?]

**कालिन्दी** – अहं खु तक्केमि केणावि हत्थविण्णाणणेउणं पआसइउकामेण णिअबुद्धिमेत्तकप्पिओ कोवि लिहिओ । घुणक्खरणाएण उण महाभाआ किईए संवादोजाओत्ति ।

[अहं खलु तर्कयामि केनापि हस्तविज्ञाननैपुणं प्रकाशयितुकामेन निजबुद्धिमात्रकल्पितः कोऽपि लिखितः । घुणाक्षरन्यायेन पुनः महाभागाकृतेः संवादो जात इति । ]

**मल्लिका** –ण सुट्ठु दिट्ठं तुए काएवि महाभाअदंसणा-परवसहिअआए णिउक्कण्ठाविणोअणसाहणं समाणुराअस्स तस्स पडिरूवं थणांसुए लिहिअं ति भणिदव्वम्। णं एत्थ ओलग्गा अज्ज वि दीसन्दिणअणपडिआवाह-मीसालिआ अञ्जणबिन्दुणो।

[न सुष्टु दृष्टं त्वया कयापि महाभाग-दर्शनपरवशहृदयाया निजोत्कण्ठाविनोदन-साधनं समानुरागस्य तस्य प्रतिरूपं स्तनांशुके लिखितमिति भणितव्यम्। नन्वत्रावलग्नाः अद्यपि दृश्यन्ते नयनपतिता बाष्पमिश्राञ्जन-बिन्दवः ।]

**कालिन्दी** – सहि ण अब्भिट्टइ एअं। कहं णु दीवंतरे दंसणं होज्ज महाभाअस्स काएवि। अवि अ पच्चक्खविरुद्धं अ एअं। णं पच्चूए चिअ तुए दिट्ठी ण उण ता एव्वं विइ अवपत्थिल्लो।

(सस्मितं)

दाणिं होइअ।

[सखि, न युज्यत एतत्। कथन्नु द्वीपान्तरे दर्शनं भवेत् महाभागस्य कस्यापि। अपि च प्रत्यक्षविरुद्धं चैतत्। ननु प्रत्यूष एव त्वया दृष्टं, न पुनः तदा एवंविधावस्थावान्। (सस्मितं) इदानीं भवति च।]

**मल्लिका** – (स्वगतं)

जुत्तिजुत्ताइ इमाइ एदाए वअणाइ। हिअअ, ईसि सूसासहोहि।

(प्रकाशं)

कालिन्दि, अत्थु आकिईसंवाओ। कहं दीवंतरट्ठिए चित्तसिप्पिणा एसो हारमज्झ-महिंदमणीवि लिहिओ।

[(स्वगतं)युक्तियुक्तानि इमानि तस्याः वचनानि। हृदय, ईषत्सोच्छवासं भव। (प्रकाशं) कालिन्दि, अस्तु आकृतिसंवादः। कथं द्वीपान्तरस्थितेन चित्रशिल्पिना एष हारमध्य-महेन्द्रमणिरपि लिखितः।]

**कालिन्दी** : (विहस्य)

ण जुज्जइ अद्धजरईणाओ, अद्धं संवअइ अद्धं णत्ति। पेच्छ।

[(विहस्य) न युज्यते अर्धजरतीन्यायः। अर्धं संवदते,अर्धं नेति। पश्य।]

(संस्कृतमाश्रित्य)

सत्कवीन्द्रमतिवत् यदृच्छया चित्रशिल्पिकरवर्णतूलिका।
तत्तदुल्लिखितुमप्यलक्षितं वस्तुतत्त्वमखिलं प्रगल्भते ॥10॥

**मल्लिका** - (सवितर्कं)

हत्थि, सन्देहडोलाएहिं दोलइव्व हिअअम्।

(स्वगतं, सान्तर्धैर्यं)

जं होइ तं होउ। तद्दंसणोस्सुअ लोअणाए मए दिट्ठिआ लद्धो तस्स पडिच्छन्दो।

[(सवितर्कं) हन्त, सन्देहदोलया दोलत इव हृदयम्। (स्वगतं, सान्तर्धैर्यं) यद्भवति तद्भवतु। तद्दर्शनोत्सुकलोचनया मया दिष्ट्या लब्धः तस्य प्रतिच्छन्दः।]

**नवमालिका** - सव्वहा मा ते संसओ होउ। एसो खु मुसा दे वअणंति उवालद्धो सच्चं वअणं कादुं चित्तमिस्सेण अत्ताणं पआसेइ। विसूरइ अ तुज्झ अण्णहा संभावणेण। ता मुणालधवलो हारो विअ अरुहइ तुह हिअअसङ्गसोभग्गम्।

(इत्युत्तरीयपदे संश्लेषयति)

[सर्वथा मा ते संशयो भवतु। एष खलु मृषा ते वचनमित्युपालब्धः सत्यं वचनंकर्तुं चित्रमिषेणात्मानं प्रकाशयति। खिद्यते च तव अन्यथासंभावनेन। तस्मान्मृणालधवलो हार इव अर्हति तव हृदयसङ्गसौभाग्यम्। (इत्युत्तरीयपदे संश्लेशयति)]

**मल्लिका** - (सौत्सुक्यस्मरणहर्षवितर्कं, स्वगतं) किं णु खु एदम्? [किन्नु खल्विदम्?]

(संस्कृतमाश्रित्य)

अस्मिन्नुपेयुषि कुचस्थलमुत्तरीये
निर्बीजमङ्कुरति काचिदनुस्मृतिर्मे।
किञ्चास्य चित्रदयितस्य समेत्य सङ्गं
अङ्गं तदङ्गपरिरब्धमिव प्रहृष्टम् ॥ 11 ॥

**नवमालिका** -सहि बाहमन्थरणिप्फन्दलोअणा किं झाअसि?
[सखि, बाष्पमन्थरनिष्पन्दलोचना किं ध्यायसि?]

**मल्लिका** – हला, एदस्स दंसणे णट्ठलद्धं विअ संजाअप्पच्च-भिण्णं विअ सअं एव्व किंवि किं वि उल्लिइ हिअअम्।
[सखि, एतस्य दर्शने नष्टलब्धमेव सञ्जात प्रत्यभिज्ञमिव स्वयमेव किमपि किमपि उल्लिखति हृदयम्।]

**नवमालिका** – (जनान्तिकं)
कालिन्दि, अच्चेरं एदं, जं दीवंदरट्ठिअस्स दिव्वंवरस्स आअमणं जं वि तस्स दंसणेण पच्चभिण्णा।
[(जनान्तिकं) कालिन्दि, आश्चर्यमेतत्, यद्द्वीपान्तरस्थितस्य दिव्याम्बरस्यागमनं यदपि तस्य दर्शनेन प्रत्यभिज्ञा ।]

**कालिन्दी** – किं एत्थ अच्चेरं जं जस्स पत्थुदं तस्स दूरट्ठिअंवि परसं आअच्छइ। पेच्छ।
[किमत्राश्चर्यं, यद्यस्य वस्तुतः तस्य दूरस्थितमपि पार्श्वमागच्छति । पश्य-]

(संस्कृतमाश्रित्य)

अपि देशविप्रकृष्टपाशैर्दृढावकृष्टानि ।[1]
जनानान्तरेपि झटिति हि स्वामिनमनुयान्ति स्वानि वस्तूनि ॥12॥

पच्चभिण्णा उण अब्भुदेव्व । अवा मल्लिआमूले जणणं सहजा मालेत्ति अब्भुदो एव्व एदाए सच्चो उत्तंदो।
[प्रत्यभिज्ञा पुनरद्भुतैव । अथवा मल्लिआमूले जननं सहजा मालेत्यद्भुत एवैतस्यास्सत्यो वृत्तान्तः]

---

1. ° र्द्रुतं विकृष्टानि, मु,

(प्रविश्य)

**प्रतिहारि** –भट्टिदारिए एसो कोवि कङ्केलिआदस्सिअमग्गो भमरओ णाम कणअसुत्त–लिहिअं खाइरंगारतव्वं धवलंबरवेडिअंपि वीसुपसरन्तमोपुमंझवाअड–दिट्ठसण्णिवेसं करअले किंवि रअणं धारअंतो दुवाराम्मि वट्टइ। कङ्केलिआ भणइ–सो हिर अज्जपादे भअवईए अस्समे समावत्तिदिट्ठिण देण महाभाएण भट्ठिदारिअं दट्ठु खन्दावाराओ आअदं ति।

[भर्तृदारिके, एष कोऽपि कङ्केलिकादर्शितमार्गः भ्रमरको नाम कनकसूत्रलम्बितं खादिराङ्गारताम्रं धवलाम्बर वेष्टितमपि विष्वक्प्रसरन्मयूख–पुञ्जप्रकटदृष्टसन्निवेशं करतले किमपि रत्नं धारयन् द्वारे वर्तते। कङ्केलिका भणति "स किल अद्य प्रभाते भगवत्या आश्रमे समावृत्तिदृष्टेन तेन महाभागेन भर्तृदारिकां द्रष्टुं स्कन्धावा–रादागतः।]

(मल्लिका सख्योर्मुखमवलोकयति)

**नवमालिका** [1]– जुज्जइ एसो किल कङ्केलिआए चिच्छओ पि महाभाअस्स अब्भन्तरो अणुअरो।
[युज्यते एष किल कङ्केलिकायाः शिक्षितः पतिः महाभागस्य अभ्यन्तरानुचरः।]

**मल्लिका** – कण अलए! पवेसणिज्जो।
[कनकलते, प्रवेशनीयः।]

---

1. add (जनान्तिकं), म$_1$, त$_1$, मै$_1$, मै$_2$, मै$_4$, के$_1$, अ$_1$

**प्रतिहारी** - तह । [तथा । ]

(इति निष्क्रम्य यथोद्दिष्टेन भ्रमरकेण प्रविशति)

**भ्रमरकः** - (स्वगतं)

अज्ज मह अणाअरिअस्स एदस्स अमच्चघरस्स पवेसे कङ्केलिआ दुवारं आसि ।

(परिक्रम्य, सश्लाघं)

उदारसीलो खु णाहो मारुओ जेण महाराआणुपेसिओ दिव्वंदरआअदो बालक्क-पाडलो एसोवि मणी दिण्णो । अहवा तारिस-मालिआदाणस्स जीविअंवि उइअं एव्व । का उण गणणा मणिहारेसु ।

(निःश्वस्य)

कीस सत्थवाहहिदएण केणोपयाणिकिओ अणक्खमूलं तं चित्तफलअं कीस वा महाराएण वेसिअम् । जस्सिं आणीअमेत्ता एव्व विण्णाअ कुलगोत्ताए सिंहलदीवा आअआए चित्तकण्णाए दंसणेण दड्डो विअ णाअड्डि अदिट्ठी चिट्टइ णाह मारुओ । अहव दूरेकुलगोत्ताइं अ णाआसत्ताएत्ति भणिदव्वम् ।

(सविमर्श)

[(स्वगतं) अद्य ममानाचरितस्येतस्या-मात्यगृहस्य प्रवेशे कङ्केलिकाद्धारमासीत् । (परिक्रम्य, सष्लाघं) उदारशीलः खलु नाथो मारुतः येन महाराजानुप्रेषितः द्वीपान्तरादागतः बालार्कपाटलः

एषोऽपि मणिर्दत्तः । अथवा, तादृशमालिकादानस्य जीवितमप्युचितमेव। का पुनर्गणना मणिहारेषु। (निश्वस्य) कस्मात्सार्थवाहहतकेन उपायनीकृतं अनर्थमूलं तच्चित्र-फलकं कस्माद्वा महाराजेन प्रेषितं यस्मिन्नानीतमात्रैव विज्ञातकुलगोत्रयोःसिंहलद्वीपादागतायाश्चित्रकन्याया दर्शनेन दग्ध इव नाकस्थितदृष्टिरिस्तिष्ठति नाथमारुतः। अथवा दूरे कुलगोत्रे च नाकशक्त्या इति भणितव्यम्। (सविमर्शं) एतावन्मात्रेपि जगति[1] का नु खलु हसितलक्ष्मीसौन्दर्यविभ्रमा तादृशी सत्या भवेत्कन्यका?]

**प्रतिहारी** - एसा भट्टिदारिआ । [एषा भतृदारिका ।]

**भ्रमरकः**[1]–हुंसा चिअ[2] एसा कणअचंपअदलदामरमणीज्जङ्गी महाभाआ । जा चित्तगआ णाहेण मारुएण णिप्फन्दमन्थरसिणिद्धेहिं लोअणेहिं पुलोइज्जइ। अदो एव्व जुज्जइताए कुअत्थललिहिआ मालिआवि ।

(साशंसं)

ताला खु वंमहो वंमहो । जाला तस्मिं विअ एद्धवि जणे मुञ्चइ अट्ठे बाणे ।

(नातिसमीपस्थ एव)

पणमामि ।

[हुं, सैवैषा कनकचम्पकदलदामरमणीयाङ्गी महाभागा, या चित्रगता नाथेन मारुतेन

1. अस्मिन्, $मु_2$ add (सानन्दं स्वगतं), $मु_1$ 2. सच्चा [सत्या], $मु_1$

निष्पन्दमन्थरस्निग्धाभ्यां लोचनाभ्यां दृश्यते। अत एव युज्यते तस्यां कुचस्थललिखिता मालिकाऽपि। (साशंसं) तदा खलु मन्मथो मन्मथः यदा तस्मिन्निवात्राऽपि जने मुञ्चत्यर्घान् बाणान्। (नातिसमीपस्थ एवे) पणमामि।]

**मल्लिका** – (स्वगतं)

तस्स परिअणोत्ति महन्तो खु एअस्सिं बहुमाणो। पुण्णवन्ता खु एदे जे अलसीदलसामलं महाभाअं फलणिम्माणेहिं णअणेहिं[1] णीसंक इच्चिअ पेच्छन्ति।

(जनान्तिकं)

कालन्दि, उइअं ववहर।

[(स्वगतं) तस्य परिजन इति महान्खल्वे-तस्मिन् बहुमानः। पुष्यवन्तः खल्वेते ये अतसीदलश्यामलं महाभागं सफलनिर्माणै-र्लोचनैः निःशङ्कं सदैव पश्यन्ति। (जनान्तिकं) कालिन्दि, उचितं व्यवहर।]

**कालिन्दी** – भमरअ ईसि समीवे होहि।

[भ्रमरक, ईषत्समीपे भव।]

**भ्रमरकः** – (स्वगतं)

कहं णामहेअं वि अवगअं एआहिम्?

[कथं नामधेयमप्यवगतमेताभिः?]

(समीपमुपसर्पति)

1. दिट्ठीहिं, मु₁

**प्रतिहारी** – पअसद्दो विअ पडिहारम्मि । ता गच्छह्मि ।

[पदशब्द इव प्रतिहारे । तस्माद्गच्छामि ।]

**सख्यौ** – (जनान्तिकं)

उइअवेइणी खु कणअलता ।

[उचितवेदिनी खलु कनकलता ।]

**भ्रमरकः** – (मल्लिकां निर्वर्ण्य, स्वगतं)

एआए बिसकण्डपण्डुरगण्डमूलवक्खाअमअणा तणुवल्ली ।

(पुनर्निर्वर्ण्य)

एसा जह्नवी विअरअणसाणुसिङ्गं एआए कुअमण्डलं मण्डेइ णाहस्स हारयट्ठी हन्त, न केवलं हारयट्टी, णाहो वि मारुओ उत्तरिज्जपल्लवो लम्बी इहच्चिअ कीलइ ।

[(मल्लिकां निर्वर्ण्य, स्वगतं) एतस्याः बिसकाण्डपाण्डुरगण्डमूलव्याख्यातमदनवेदना तनुवल्ली। (पुनर्निर्वर्ण्य)एषा जाह्नवीव रत्नसानुशृङ्गमेतस्याः कुचमण्डलं मण्डयति नाथस्य हारयष्टिः । हन्त, न केवलं हारयष्टिः । नाथोऽपि मारुतः उत्तरीय-पल्लवालम्बी इहैव क्रीडति।]

**कालिन्दी** – भमरअ, को उण वावारो महाभाअस्स । अवरह्नह्मि काइ वाआदेसवअणाणि तुह वअणं पाविआइ ।

[भ्रमरक, कः पुनर्व्यापारो महाभागस्य । अपराह्ने कानि वागादेशवचनानि तव वदनं प्रापितानि ? ]

**भ्रमरकः**-सुणीअउ । अत्थि रअणपइणामहेएण सञ्जत्तिअ वरेण अह्माणं महाराअस्स दिण्णं उवाअणं अवहं रअणम्। एक्कं विलआजणचिहुरबन्धसण्णिवेस-जोग्गो अमुणिअग्घो सीमन्तमणी। अण्णं चित्तगअं सअललोअलोअणसंवणणं लाअण्णमअं किंवि कण्णआरअणम् ।

[श्रूयताम् । अस्ति रत्नपतिनामधेयेन सांयात्रिक वरेण[1] अस्माकं महाराजस्य दत्तमुपायनमुभयं रत्नम् । एकं वनिताजनचिकुरबन्धसन्निवेश-योग्यः अज्ञातार्घस्सीमन्तमणिः । अन्यच्चित्रगतं सकललोकलोचनसंवननं लावण्यमयं कमपि कन्यकारत्नम् । ]

**मल्लिका** - (स्वगतं)

अम्महे ण संछाइओ पमाएण थणंसुअगओ महाभाअपडिच्छन्दो ।

[(स्वगतं) अहो न संच्छादितः प्रमादेन स्तनांशुकगतो महाभागप्रतिच्छन्दः । ]

(व्याजेन संच्छादयति)

**सख्यौ** -- (जनान्तिकं)

किं एसो एव्व रअणपई ? [किमेष एव रत्नपतिः ?]

**कालिन्दी** - तदो तदो ? [ततस्ततः ?[1]]

**भ्रमरकः** - तदो भणिअं तेण सोअ मणि तं अ चित्तफलअं अण्णं वि किंवि दन्तकरण्डअगब्भगअं

1. सायन्त्रिकवरेण, के$_3$

दिव्वंबरं सीहलद्दीवपेरन्ते लङ्काओ उत्तरपुरिमे दिसाभाए माणुससंचारहूणे[1] जुण्णरण्णमज्झम्मि अब्भंकससिहरस्स कस्सवि वडरुक्खस्स हेट्ठत्थले पाहाणपट्ठपडिट्ठाविअं मग्गपब्भट्ठेहिं अह्मेहिं दिट्ठन्ति ।

[ततो भणितं तेन, स च मणिः, तच्च चित्रफलकं, अन्यदपि किमपि दन्तकरण्डकगर्भगतं दिव्याम्बरं सिंहलद्वीपपर्यन्ते लङ्कातः उत्तरपूर्वे दिशाभागे मानुषसञ्चारहीने जीर्णारण्यमध्ये अभ्रंकषशिखरस्य कस्यापि वटवृक्षस्याधस्थले पाषाणपृष्ठप्रतिष्टापितं मार्गप्रभ्रष्टैरस्माभिर्दृष्टमिति ।]

**कालिन्दी** – (जनान्तिकं)

मण्णे तं एव्व एदं दिव्वंबरम् ।

(प्रकाशं)

तदो तदो ?

[(जनान्तिकं) मन्ये तदेवैतद्दिव्याम्बरम् । (प्रकाशं) ततस्ततः ?]

**भ्रमरकः** – तदोअ दंसिअदिव्वंबरो एव्व गहिअपारितोओ जहेच्छं गओ सो रअणवई ।

[ततश्च दर्शितदिव्याम्बर एव, गृहीतपारितोषिकः यथेच्छं गतः स रत्नपतिः ।]

**सर्वाः** – स्वगतं)

गओ संसओ । [गतः संशयः ।]

---

1. सुण्णे, [शून्ये] मु.

**कालिन्दी** - तदो तदो [ततस्तत : ?]

**भ्रमरकः** - अह वच्चलेण भट्टिणा मह हत्थे पेसिअं तं रअणजुअलं दट्टुण, णाहमारुओ सहत्थेण गोह्णिअ तं चित्तकण्णअं विह्मआणंदणिब्भरेहिं णअणेहिं विसट्टपुण्डरीअदलमालाजालेहिं विअ अच्चअंदो संजाअवच्चभिण्णो चिरं ठिओ ।

[अथ वत्सलेन भर्त्रा मम हस्ते प्रेषितं तद्रत्नयुगलं दृष्ट्वा, नाथमारुतः स्वहस्तेन गृहीत्वा, तां चित्र-कन्यकां विस्मयानन्दनिर्भराभ्यां नयनाभ्यां दलत्पुण्डरीकदलमालाजालैरिवार्चयन् सञ्जात-प्रत्यभिज्ञः चिरं स्थितः ।]

**मल्लिका** - (सनिर्वेदं, निश्वस्य, स्वगतं)

हन्त, मह जीविआलम्बणमणोरह अज्ज दिज्जो तुज्झ जलंजली ।

- (जनान्तिकं)

कालिन्दि, विसंवदिआ तुह उववत्तीओ ।

[(सनिर्वेदं, निश्वस्य, स्वगतं) हन्त मम जीवितालम्बनमनोरथ अद्य देयस्तव जलाञ्जलिः । (जनान्तिकं) कालिन्दि, विसंवदिकास्तवोपपत्तयः ।]

**कालिन्दी** - (जनान्तिकं)

सहि वअणसेसं असुणअ कीस तम्मसि?

(प्रकाशं)

तदो तदो ?

[(जनान्तिकं) सखि वचनशेषमश्रुत्वा कस्मात् ताम्यसि ? (प्रकाशं) ततस्ततः ?]

**भ्रमरकः** – तदो अ तं कण्णअं सच्चं मण्णन्तो सीमन्तवदे तं मणिं करअलेण पुणो पुणो विणिहिअवंदो ।

[ततश्च तां कन्यकां सत्यं मन्यमानः सीमन्तपदे तं मणिं करतलेन पुनः पुनः विनिहितवान् ।]

**मल्लिका** – (जनान्तिकं)

सुदं वअणसेसं वि ? [श्रुतं वचनशेषमपि ?]

**नवमालिका** – (स्वगतं)

भअवं मअण, जुत्तं ण्विदं मुद्धहिअअं कुलकण्णआजऩं तस्सिं महाभाए दिढलग्ग-हिअअं काएविअ तं उण अण्णस्सिं संकामेसि ।

[भगवान्, मदन ! न युक्तमिदं मुग्धहृदयं कुलकन्यकाजनं तस्मिन् महाभागे दृढलग्न-हृदयां कारयित्वा तं पुनरन्यस्मिन् संक्रामयसि !]

**कालिन्दी** – (स्वगतं)

किं णु खु एदम् ? अहवा असंपुण्णआ एव्व वअणम् ।

(प्रकाशं)

अहो महन्तो खु अणुराओ तस्सिं जणे महाभाअस्स । अह काए विअ तीए आकिदी ।

[(स्वगतं) किन्नु खल्वेतत् ? अथवा असम्पूर्णमिव वचनम्। (प्रकाशं) ओ महान्खल्वनुरागः तस्मिन् जने महाभागस्य। अथ कस्या इव तस्या आकृतिः? ]

(मल्लिका साशंसं श्रृणोति)

**भ्रमरकः** - एदह्मं समअं मुणेमि का एवि तीए सरिसी णत्थित्ति ।

[एतावन्तं समयं मन्ये कापि तस्याः सदृशी नास्तीति ।]

**मल्लिका :** (सनिश्वासं, स्वगतं)

अदो खु महाभअस्स लोअणाणं अणुरुहा जाअह्मि ।

[अतः खलु महाभागस्य लोचनयोः अनर्हा जातास्मि ।]

**कालिन्दी** - की एद्धहं समअंत्ति सासङ्कं विअ वअणम् ?

[कस्मादेतावन्तं समयं इति साशङ्कमिव वचनम् ?]

**भ्रमरकः** - एताहे उण

(इत्यर्धोक्ते)

उइआणुइअं ण जाणीअदि जह दिट्ठं भणामि ।

(मल्लिकां निर्दिश्य)

एमेअ वट्टइ !

[इदानीं पुनः (इत्यर्धोक्ते) उचितानुचितं न ज्ञायते यथानिर्दिष्टं भणामि। (मल्लिकां निर्दिश्य)एवमेव वर्तते।]

**मल्लिका** - (सोच्छ्वासं)

दिट्ठिआ सरिच्चपअं पि आरोविअह्मि ।

[(सोच्छ्वासं) दिष्ट्या [1]सदृक्षपदमप्यारोपिताऽस्मि ।]

**उभे** – (जनान्तिकं)

सहि दिट्ठिआ वड्ढामो तुमं एव्व तहिं आलिहिआ ।

[सखि, दिष्ट्या वर्धामहे, त्वमेव तत्रालिखिता ।]

**मल्लिका** – कहं सारिस्समेत्तेण अंति भणीअदि ।

[कथं सादृश्यमात्रेण अहमिति भण्यते ?]

**कालिन्दी** – तुमं दट्ठुणा अण्णाए पडिरुव्वं महाभाओ ण वेच्छ इत्ति ।

[ त्वां दृष्ट्वा अन्यस्याः प्रतिरूपं महाभागो न पश्यतीति ।]

**मल्लिका** –अहो सिणेहो ! [अहो स्नेहः !]

**कालिन्दी** – (प्रकाशं)

भमरअ, किं एत्थ अणुइअं, ण हि अग्गिसद्दे उच्चारिए जीहा ढज्जइ। णणु आकिई सारिसं होइ।

[भ्रमरक ! किमत्रानुचितम् ? न हि अग्निशब्दे उच्चारिते जिह्वा दह्यते ? ननु आकृतीनां सादृश्यं भवति ।]

**भ्रमरकः** – ण केवलं सरिस्समेत्ति, सच्चं तत्तहोईए एव्व अज्ज णाहस्स दिण्णाए मालिआए सह लिहिआ ।

---

1. सादृश्य॰, अ$_2$, के$_3$, के$_4$

[न केवलं सादृश्यमात्रं, सत्यं तत्रभवती एव अद्य नाथाय दत्तया मालिकया सह लिखिता ।]

**कालिन्दी** – (जनान्तिकं)

सहि, किं अज्जवि सारिस्समेत्तम् ।

[सखि, किं अद्यापि सादृश्यमात्रम् ?]

**मल्लिका** – (सानन्दं)

सहि कहं दीवंदरे मह पडिच्छन्दो ?

[सखि, कथं द्वीपान्तरे मम प्रतिच्छन्दः?]

**कालिन्दी** – जह महाभाअस्स

(प्रकाशं)

अच्चेरं एदं, तदो तदो ?

[यथा महाभागस्य।(प्रकाशं)आश्चर्यमेतत्। ततस्ततः।]

**भ्रमरकः** – तदोअ पिअमित्तेण णाहकलअण्ठेण ण एसा सच्चत्ति णिवारिए णिवुत्तोतो सीमन्तमणिणवेसपआसाओ महाभाए एव्व जोग्गोत्ति हं एअस्स दाणे आणत्तोह्मि।

[ततश्च प्रियमित्तेण नाथकलकण्ठेन नैषा सत्येति निवारिते निवृत्तस्तस्मात् सीमन्तमणि-निवेशप्रयासात् महाभागाया एव योग्य इति अहमेतस्य दाने आज्ञप्तोऽस्मि ।]

(इति मणिमम्बरादुद्धृत्य कालिन्दीहस्ते समर्पयति)

**कालिन्दी** –भमरअ,परवई खु अह्माणं पिअसी महाभाएण। ता जह णिद्दिट्ठं करह्म ।

[भ्रमरक, परवती खल्वस्माकं प्रियसखी महाभागेन । तस्मात् यथानिर्दिष्टं कुर्मः ।]

(इति मणिमादाय मल्लिकायाः प्रदर्शयन्ती, जनान्तिकं, संस्कृतमाश्रित्य)

तदिदं हाटकसूत्रस्यूतं सखि पाटलं रत्नम् ।
प्रेषितमनुरागधरं मन इव मूर्तं[1] स्मरेषुणा विद्धम् ॥13॥

(मल्लिका सोत्कण्ठमालोकयति) (नेपथ्ये)

एषा सम्प्रति चक्रवाकरमणी दृष्ट्वा मिलद्बाष्पया
पश्यन्ती चरमक्षमाधरतटीसीमन्तरत्नं रविम् ।
सम्प्राप्तेव भवान्तरं शिव शिव व्यामुह्यता चेतसा
पार्श्वस्थश्च न वेत्ति वल्लभमहो शापस्य दुर्लङ्घता ॥ 14 ॥

(सर्वे आकर्णयन्ति)

**मल्लिका** – (स्वगतं)

हन्त अहं विअ तवसिणी चक्कवाई वि ।

[हन्त, अहमिव तपस्विनी चक्रवाक्यपि ।]

(पुनर्नेपथ्ये)

त्यज चक्रवाकि शोकं वधान धैर्यं सहस्व समयममुम् ।
अयमेव वासरमणिर्हरिष्यते शापमूर्च्छान्ते ॥ 15 ॥

**नवमालिका** –भट्टिदारिए एदे खु वन्दिणो भट्टिणो अमच्चस्स साअं सच्छन्दं उग्घोसअन्ति ।

---

1. om मूर्तं, $मु_1$, $म_1$

[भर्तृदारिके, एते खलु वन्दिनः भर्त्रे अमात्याय सायं सन्ध्यामुद्धोषयन्ति ।]

**भ्रमरकः** - अणुमण्णंतु मं महाभाओ जाव णाहस्स इमं वुत्तन्दं णिवेदेमि ।

[अनुमन्यतां मां महाभागाः । यावन्नाथायेमं वृत्तान्तं निवेदयामि ।]

**कालिन्दी** -एइणा सञ्जमणमग्गेण णिग्गमिअ जह । णेउर सद्देण जाणीअदि देवी पिअसहिं दट्ठुं आअच्छइत्ति ।

[एतेन सञ्जवनमार्गेण निर्गत्य याहि। नूपुर-शब्देन ज्ञायते देव्यपि प्रियसखीं द्रष्टु-मागच्छतीति ।]

(इति निष्क्रामति)

**नवमालिका** - अह्ये वि पच्चुग्गचछह्म देविम् ।

[वयमपि प्रयुद्गच्छामो देवीम् ।]

**मल्लिका** - (स्वगतं)

अज्ज वि अणासङ्गं हिअअम् ।

(सविस्मयं)

कहं णु दिव्वंदरे मह पडिच्छन्दो त्ति ।

(सानन्दं)

सुट्ठु भणिअं कालिन्दीए जह महाभाअस्सत्ति ।

[(स्वगतं) अद्यापि अनास्थं हृदयम् । (सविस्मयं) कथं नु द्वीपीन्तरे मम प्रतिच्छन्द इति ।(सानन्दं) सुष्ठु भणितं कालिन्द्या, यथा महाभागस्येति ।]

**भ्रमरकः** – (सहर्षं, स्वगतं)

अणुट्ठिओ णाहस्स आदेसो, दिट्ठो अ विआरेहिं पडिरुव्वधारणेण अ णाहे एदाए अणुराओ, वआसिओ अ णाहस्स भावो ।

[(सहर्षं, स्वगतं) अनुष्ठितो नाथस्य आदेशः,दृष्टश्च विकारैः प्रतिरूपधारणेन च नाथेऽस्याः अनुरागः प्रकाशितश्च नाथस्य भावः ।]

**मल्लिका** – सहिओ गच्छह्म । [सख्यः ! गच्छामः ।]

(इति निष्क्रान्ताः सर्वे)

उद्दण्डं रङ्गनाथः सुतमलभत यं रङ्गदेवी तथाम्बा
त्रैविद्येशो महर्षिर्निरवधिमहिमा यद्धिते जागरूकः ।
तस्य श्रीविक्रमङ्काबहुमतिरचिते मल्लिकामारुतेऽस्मिन्
द्वैतीयीको व्यतीतः प्रकरणतिलके निष्कलङ्कोऽयमङ्कः[1] ॥



1. मु, reads, इति मल्लिकामारुते द्वितीयोऽङ्कः; omits the verse.

## ॥ तृतीयोऽङ्कः ॥

(ततः प्रविशति मन्दाकिनी)

**मन्दाकिनी** - (सानन्दं)

अहो ऐदंपर्यमस्मदानुकूल्ये विधातुः । तथाहि -

अव्याजरम्यो सदृशोनुरागो
यन्मल्लिकामारुतयोर्विगाढः ।
यच्चानयोः सङ्गममाशु शंसन्
क्षौमस्य सीमन्तमणेश्च लाभः ॥ 1 ॥

(सास्रं)

दिव्याम्बरोत्तरीयं शिखामणिन्यासरुचिरसीमन्तम् ।
पश्यन्ती वपुरस्या प्राच्यं जन्म स्मरामि वत्सायाः ॥ 2 ॥

(सहर्षवितर्कं)

एतयोः खलु-

जन्मन्येव प्राक्तने लब्धदार्ढ्यः
प्राप्तो दीप्तिं दर्शनादद्य भूयः ।
मन्ये यावद् द्रव्यभावि[1]प्रतिष्ठो
माञ्जिष्ठोऽयं वत्सयोः रागबन्धः ॥ 3 ॥

तदुक्तं अनुरागतत्त्वविद्भिः -

यूनोः स्थिरप्रकाशः स्थिराप्रकाशोऽस्थिरप्रकाशश्च ।
उत्तममध्यमनीचा रागा माञ्जिष्ठनीलकौसुम्भाः ॥ 4 ॥

---

1. दुर्विभाव्य ॰ मु,

(सदयं)

वर्णितश्च कालिन्द्या मल्लिकाया मदनातङ्कः।

लीनावल्लीभवनकुहरे पत्ररन्ध्राच्चकोरी-
चञ्चुस्रस्तं शशिकरकणं वीक्ष्य मूर्च्छामुपैति ।
लीलारामात् पिकमुखरितात् का कथा सा बिभेति
स्वालापेभ्यः चकितनयना यत्कुहूकोमलेभ्यः ॥ 5 ॥

इति ।

विनयगाम्भीर्यनिधिः मारुतोपि निरवधिस्नेह-
मारूढ एव । तथाहि -

इच्छति दर्शनमनिशं पृच्छति कार्याणि कथयति रहस्यम् ।
चिरपरिचयैकलभ्यं विस्रम्भं प्राप्य कतिपयैर्दिवसैः ॥ 6 ॥

सुविहितश्च परस्परप्रतिच्छन्ददर्शनमात्र-
विनोदितोत्कण्ठयोः वत्सयोः भूयोदर्शनाय
कालिन्दी सारसिकामुखेन वसन्तोद्याने निपुण
उपायः ।

(सवितर्कं)

इदानीं शम्बरकस्य शाम्बरी प्रतिविधेया ।

(आकाशे)

साधु, सर्वमङ्गलाचरणशेखर विश्वावसो, साधु !
अजहतैव माधुर्यं प्रत्याख्यातो राजनिर्बन्धः ।
यदस्या मल्लिकाया वरनिर्णये नाहं प्रमाणं,
अपि तु भगवती कात्यायन्येवेति ।

(सानुशयं)

हन्त, शम्बरकनयस्य कौटिल्यमाशङ्क्य अनाश्वासं हृदयम् ।

(प्रविश्य, ससंभ्रमा)

**सारसिका** - भअवई ! अणुट्ठिओ आदेसो । वसन्तवणुज्जाणे अदिमुत्तलआमण्डवम्मि पडिट्ठाविओ मए भमरअमेत्तसहाओ मारुओ । कालिन्दीए वि तहिंचेअ आणिज्जइ कुसुमाहरणच्चलेण णोमालिआ दुईआ मल्लिआ । [भगवति ! अनुष्ठितो आदेशः । वसन्तवनोद्याने अतिमुक्तलतामण्डपेप्रतिष्ठापितो मया भ्रमरक-मात्रसहायो मारुतः । कालिन्द्याऽपि तस्मिन्ने-वानीयते कुसुमाहरणच्छलेन नवमालिका-द्वितीया मल्लिका ।]

**मन्दाकिनी** - (सानन्दं)

अस्तु भूयोदोर्शनेन किमप्याश्वासनं वत्सयोः ।

इमौ प्रकृत्या सुकुमारगात्रौ कथञ्चिदातङ्कममुं सहेते ।
परस्पराङ्गव्यतिषङ्गहृद्यौ यन्माल्यहारौ [1]प्रतिधारयेते ॥7॥

(विलोक्य)

वत्से, कुतो विभ्रान्तलोचना वेपमानाङ्गी ससंभ्रमा इव लक्ष्यसे ?

**सारसिका** - भअवइ ! अज्ज आणत्तो किल मच्चो महाराएण विस्सावसू । एण्हिं पुच्छदव्वं तुए

1. व्यर्ति, मु$_1$, त$_2$, मै$_3$, अ$_1$

गोरीघरं गउअ मल्लिका करस्स दिज्ज इत्ति ।
जइ कहइस्सह भअवई संबरअस्सत्ति ताला
अणुट्ठेज्जो तुए अविसंकं गोरीए आएसोत्ति ।

[भगवति, अद्य आज्ञप्तः किल अमात्यः
महाराजेन विश्वावसुः । इदानीं प्रष्टव्यं त्वया
गौरीगृहं गत्वा मल्लिका कस्मै दीयतामिति।
यदि कथयिष्यति भगवती शम्बरकायेति
तदा अनुष्ठेयस्त्वयाविशङ्कं गौर्या आदेश इति ।]

**मन्दाकिनी** – (साशङ्कं)
ततस्ततः ?

**सारसिका** – अह तहत्ति पडिवण्णराअसासणो
परिउओ राअपुरिसेहिं गोरीए घरं पविसन्तो
अज्ज आअच्छन्तीए मए दिट्ठो अमच्चो । एअं
अ भअवईए णिवेएमित्ति झत्ति आअह्मि ।

[अथ तथेति प्रतिपन्नराजशासनः परिवृतो राजपुरुषैः
गौर्या गृहं प्रविशन् अद्यागच्छन्त्या मया दृष्टोऽमात्यः।
एतत्पुनर्भगवत्यै निवेदयामीति झटित्यागताऽस्मि ।]

**मन्दाकिनी** – (स्वगतं)
हन्त, शङ्कितमेवोपन्यस्तम् ।
(प्रकाशं)
वत्से, अहमपि गौरीदर्शनाय प्रस्थिताऽस्मि ।
तदादेशय मार्गम् ।

**सारसिका** – इदो इदो । [इतः इतः ।]

(उभे परिक्रामतः)

**मन्दाकिनी**–वत्से, सारसिके, मन्ये मल्लिकामारुतयोति-प्रकटमनुरागमुपलक्ष्य किमप्येतदारब्धं शम्बरकेण।

**सारसिका** – हुं महाराओ वि तस्स अणुऊलोत्ति संकीअइ। [हुं महाराज अपि तस्य अनुकूल इति शङ्क्यते।]

**मन्दाकिनी** – मुग्धे, त्रिभुवनदुर्लङ्घशासना नहि राजशासनानुवर्तिनी भगवती कात्यायनी ।

(विहस्य)

सुजनेषु[1] निसर्गसुकुमारश्च खलजनेषु घोरतमश्च देव्याश्चरितम् । पश्य–

सेयं कुले प्रथममद्रिपतेरपर्णा
विश्वत्रयस्य जननी कृपयावतीर्णा ।
अङ्गैरकृत्रिमविलासविलोभनीयै-
रङ्गीचकार वपुरर्धमनङ्गशत्रोः ॥ 8 ॥

**सारसिका** –सञ्जीविओ खु पुणो वि हीरदालदहण भप्पिओ कन्दप्पो विब्भमकोमलेहिं देवीए [2]अवङ्गेहिम् ।

[सञ्जीवितः खलु पुनरपि हरललाटदहन-भस्मितः कन्दर्पः विभ्रमकोमलैर्देव्या अपाङ्गैः ।]

**मन्दाकिनी** – सैषा पुनः –

---

1. om सुजनेषु, $मु_1$ 2. अङ्गेहिम् , $मु_1$, $त_{1-2}$, $अ_1$, $मै_{1-4}$, $के_{1-2}$

चण्डानां दानवानामधिरणमुरुणा मण्डलाग्रेण मुण्डं
खण्डं खण्डं दिशन्ती प्रमथमृगदृशां कन्दुकक्रीडिताय ।
कण्ठं कण्ठीरवस्य प्रचलसितसटामण्डलं मण्डयन्ती
घण्टाशङ्खासिशार्ङ्गत्रिशिखविशिखोद्दण्डषण्डञ्जिहिण्डे ॥9॥

**सारसिका**–गिराणं दूरे खु महिससिरकुट्टाअ-
चलणपोम्माए चण्डिआए विक्कमो ।
[गिरां दूरे खलु महिषशिरः कुट्टाक-
चरणपद्मायाश्चण्डिकायाः विक्रमः ।]

**मन्दाकिनी** – अतो न [1] प्रभवत्यसुरेन्द्राणामपि माया महामायायां दूरे शम्बरकस्य[2] ।

**सारसिका** – सच्चं एअम् ।

(अग्रतोऽवलोक्य)

एअं सण्णद्धकालाम्बुअसिणिद्धतमालसण्ड-
पिण्डअंधआरं घोरीघरम् ।
[सत्यमेतत् । (अग्रतोऽवलोक्य) [3] एतत्सन्नद्ध-
कालाम्बुदस्निग्धतमालषण्डपिण्डितान्धकारं
गौरीगृहम् ।]

**मन्दाकिनी** – वत्से, अत्र स्थित्वैव श्रोष्यामो दूर-
स्थितानामेव सुलक्षोऽयं वञ्चनाविशेषः ।

(नेपथ्ये)

मातर्नमोऽस्तु तुभ्यं प्रसीद कल्याणि देवि शर्वाणि ।
ब्रूया वरं वरेण्यं वत्सायास्त्वत्प्रसादलब्धायाः ॥10॥

---

1. प्रलभति मु, 2. om दूरे शाम्बरकस्य, मु, 3. विलोक्य, मु,

**मन्दाकिनी** - (आकर्ण्य)
तदिदं धीरप्रशान्तगम्भीरस्वरस्य विश्वावसो-रनुनाथनम् ।
(पुनर्नेपथ्ये)
वत्स, विश्वावसो ! ज्ञायतां शम्बरको मल्लिकाया वर इति ।

**मन्दाकिनी**- (पुनराकर्ण्य)
कथमियं तमालषण्डशृङ्गोत्था करभघर्घरस्वरा आकाशवाणी !
(स्वरानुसारेण चक्षुः प्रेष्य)
पश्य सारसिके ! तमालशृङ्गे लक्ष्यालक्ष्यः[1] कोऽपि पुरुष इव ।

**सारसिका** - भअवइ, सच्चं पुरिसो एव्व, णीलपडा-वकुण्ठिओ मालपल्लवउञ्जणिव्विसेसो घेप्पइ । [भगवति, सत्यं पुरुष एव, नीलपटाव-कुण्ठितस्तमालपल्लवपुञ्जनिर्विशेषो गृह्यते[2] ।]

**मन्दाकिनी** - अहो शम्बरकस्याविनयः । यन्निसर्गशुद्धहृदयं[3] विश्वावसुं चेष्टते ।

**सारसिका** - अह्मे उण अन्तेघरं गउअ सव्वं एअं पआसइस्सामो ।

---

1. तमालशृङ्गलक्ष्यो $म_2$, $मै_3$ 2. जल्पति, $मु_1$, $अ_2$
3. ० निपुणप्रतारणोत्सुकहृदयो, $मु_1$, $म_1$, $मै_{1-3}$, $के_1$

[वयं पुनरन्तर्गृहं गत्वा सर्वमेतत्प्रकाशयिष्यामः।]

**मन्दाकिनी**[1] – वत्से, मामैवम् । कालिन्दीं विना न क्वापि प्रकाशनीयोऽयमर्थः ।

**सारसिका** – अह को एत्थ पडिआरो ।
[अथ कोऽत्र प्रतीकारः ?]

**मन्दाकिनी**– ननु वञ्चनस्य वञ्चनमेव प्रतिक्रिया ।

कुमन्त्रिणं कूटविधानचुञ्चुं
कूटैस्सुगूढैरतिसन्दधामि ।
यत्कण्टकानां चरणक्षतानां
निष्कासनं कण्टकतो लघीयः ॥ 11 ॥

**सारसिका** –सच्चं जुज्जइ एअम् । [सत्यं युज्यत एतत् ।]

**मन्दाकिनी** – (सानुस्मरणं)
मारुतस्य प्रियसखः कलकण्ठः विष्णुरातपुत्रीं रमयन्तिकां कामयते ।

**सारसिका** – अत्थि दोह्णं वि अणुराओ । कहिअं महुअरिआए रच्छागअं कलअंढं दट्ठूण महन्तो मअणसंजरो पिअसहीए रमअन्तिआए त्ति ।
[अस्ति द्वयोरप्यनुरागः । कथितं मधुकरिकया रथ्यागतं कलकण्ठं दृष्ट्वा महान् मदनसंज्वरः प्रियसख्या रमयन्तिकाया इति ।]

---

1. om the dialogue upto पडिआरो, म$_1$, के$_1$, के$_2$

**मन्दाकिनी** – सा खल्वद्य सोमसरसि सिष्णासुर्गतवती । त्वं पुनरमुं आकाशवाणीवृत्तान्तं कालिन्द्याः कर्णे निवेद्य कलकण्ठमपि तत्तीरं संश्लेषय । अहमपि गौरीं दृष्ट्वा यावद्धिश्वावसुमस्माद् भ्रमान्निवर्तयामि ।

**सारसिका**[1]– तह । [ तथा]

(इति निष्क्रान्ते)

।। मिश्रविष्कम्भः ।।

(ततः प्रविशति उद्यानस्थो मारुतो भ्रमरकश्च)

**मारुतः** – सत्यमिदं ताच्चिन्त्यात् ताद्रूप्यं नामेति । तथाहि–

तदामुग्धं वक्त्रं किसलयसखः सोऽधरमणिः
विशाले ते नेत्रे स्तनभरनता सा तनुलता ।
सलीलं तद्यातं जननयनसञ्जीवनसुधा
प्रिया सा सा सा सेत्यजनि हृदयं तन्मयमहो ॥12॥

(परितोऽवलोक्य)

अहो विस्मापकोऽद्य विरिञ्चस्य प्रपञ्चनिर्माणप्रकारः ।

---

1. add

**सारसिका**-(सानुनयं)भअवदि रमअंतिकाए अग्गओ भादुओ रुद्दराओ संबरअपक्खवाई । ता मण्मे कलअण्ठपरिमअणं माणइत्ति ।

[ (सानुनयं) भगवति, रमयन्तकायाः अग्रजो भ्राता रुद्रातःशम्बरकपक्षपाती । तस्मात् मन्ये कलकण्ठस्य परिणयनं मन्यत इति ।]

**मन्दाकिनी**- (विहस्य) मुग्धे ज्ञायत एवैतत् । म$_2$, के$_1$

बिम्बाः कम्बुशिरस्सु शीतमहसां बिम्बीफलेनाङ्किताः
कुम्भा व्योमनि कुम्भिनां पुलिनसंभाराश्च रम्भाग्रगाः ।
अम्भोजानि दले दले धृतविधून्येतत्समस्तं पुनः
शम्पावल्लिषु तन्मयश्च भुवनं किं नात्र चिक्रीयते ॥13 ॥

**भ्रमरकः** - (स्वगतं)

सो एसो उम्माअस्स पारम्भो ।

(प्रकाशं)

णाह, सारसिआवअणाओ जाणीअइ अज्ज सुलहं तत्तहोईए दंसणंति ।

[(स्वगतं) स एष उन्मादस्य प्रारम्भः । (प्रकाशं) नाथ, सारसिकावचनात् ज्ञायतेऽद्य सुलभं तत्रभवत्या दर्शनमिति।]

**मारुतः**- (दृष्ट्वा, सहर्षं)

मत्वागमं प्रियायाः सोऽहं मदनाकुलः समुच्छ्वसिमि ।
आलोक्य चन्द्रिकोदयमार्तश्यामामुखे चकोर इव ॥ 14 ॥

(निश्वस्य)

तस्याः खलु तरलेक्षणायाः संशयविषयमनुरागसत्वं तत्त्वतो निश्चेतुमभिलषामि ।

(साशंसं)

कुवलयदृशोऽप्येवं चेतो विशेद्यदि मन्मथो
नियतमियता पूर्णाः कामा विनाऽपि च सङ्गमम् ।
सरसि नलिनी व्योम्नि व्रध्नथाऽपि परस्पर-
प्रणयसरसे[1] भावे ख्याते तयोर्मिथुनप्रथा ॥15॥

---

1. प्रभव°, मु,

**भ्रमरकः** – णाह, उववत्तीहिं णिण्णिएवि तत्तहोईए अणुराए कं णु संसओ ।
[नाथ! उपपत्तिभिर्निर्णीतोऽपि तत्रभवत्या अनुरागे कथं नु संशयः ।]

**मारुतः** – ननु रागान्धाधियामविश्वसनीया उपपत्तयः । पश्य –

उत्प्रेक्षते नयनयोरसतोऽपि भवान्
मोहेन कल्पयति मौग्ध्यमनुन्मुखत्वे ।
योषासु रागचपलो विवृताभिलाषः
प्राप्यावमानमनुतापमुपैति मूढः ॥16 ॥

**भ्रमरकः** – णं भणिअं सीमन्तमणि ओप्पअंतेण मए दिट्ठो उत्तरिज्जपल्लहिओ णाहस्स पडिच्छन्दोत्ति ।
[ननु भणितं सीमन्तमणिमर्पयता मया दृष्टः उत्तरीयपल्लवलिखितः नाथस्य प्रतिच्छन्दः इति ।]

**मारुतः** – तादृशानां भागधेयानां भाजनमात्मानं मन्यमानस्य मम सर्वथा अनाश्वासमेव हृदयम् । येन तवापि वचनमाश्वासं[1] तर्कयामि ।

**भ्रमरकः** – (सस्मितं)
मण्णे अज्ज अप्पणव्व दट्ठूण अप्प णअणेसु वि आसासणं संकणिज्जं होज्ज ।
[मन्येऽद्य आत्मनैव दृष्ट्वा आत्मनयनयोरप्याश्वासनं शङ्कनीयं भवेत् ।]

---

1. आश्वासनं, $त_2$

**मारुतः** - (सौत्सुक्यं)

प्रियागमनं प्रतिपालयन् इह केन नयने विनोदयामि ?

**भ्रमरकः**- एअं कीलन्तवसन्तलच्छि[1]पअपोम्मगलिअलक्खारसरग्गापल्लवतप्पपाअवणिउरुव्वं फन्दन्तमन्दगन्धवहंदोलिअमहुरसोल्लवल्लिकुसुमपरिमलघोलिरपुल्लन्धओलिनिओलिअम्बरं णवणवसहआरभङ्गचव्वणगव्विअकोइलपञ्चमहलब्बोलदिण्णकण्णवारणं वसन्तवणिज्जाणं पेच्छन्तस्स णाहस्ससुलहो णअणविणोओ[2]।

[एतद्क्रीडद्वसन्तलक्ष्मीपदपद्मगलितलाक्षारसरक्तपल्लवताम्रपादपनिकुरुम्बं स्पन्दमानमन्दगन्धवहान्दोलितमधुरसार्द्रवल्लीकुसुमपरिमलघूर्णनभ्रमरालिनिचोलिताम्बरं नवनवसहकारभङ्गचर्वणगर्वितकोकिलपञ्चमकोलाहलदत्तकर्णपागणं वसन्तवनोद्यानं पश्यतो नाथस्य सुलभो नयनविनोदः ।]

**मारुतः** - (विहस्य)

तदिदं दर्वीकराद्भीतस्य वल्मीकवासोपदेशः । यद्मन्मथाद्भीतस्य तच्छिबिरवासमादिशसि । पश्य-

आरक्ताः पटमण्डपाः किसलयैरुल्लोचिता पादपाः
भृङ्गालीकरवालिकापरिकराः[3] सेनाभटा वायवः ।
ताराः काहलनिस्वनाः पिकरवास्तन्मन्महे डामरं
स्कन्धावारपदं विभोरुपवनं नाम स्मरोर्वीभुजः ॥17॥

---

1. om लच्चि, $मु_1$ 2. मणविणोदो [मनविनोदः]$मु_1$ 3. परिचिताः, $म_2$, $मु_2$, $त_2$

तद्याहि शिबिरमानीयतां द्वीपान्तरभूषणं प्रिया-
प्रतिच्छन्दः ।

**भ्रमरकः** – जं णाहो आणवेइत्ति ।

[यन्नाथ आज्ञापयति ।]

(परिक्रम्य, आकाशे)

उज्जाणदेवआओ अद्य तुह्मे सहाओ णाहस्स ।

[उद्यानदेवताः अद्य यूयं सहाया नाथस्य ।]

(इति निष्क्रान्तः)

**मारुतः** (साशंसं)

को नाम अस्याः प्रतिनवं रूपामृतमास्वादयति
सुकृतशाली[1] ।

स जयति[2] तरुणस्तरुणः सा च तपस्या तपस्यापि ।
येन यया पक्त्रिमया पाणिग्र्राहिष्यते चकोराक्ष्याः ॥18॥

(निःश्वस्य)

मम पुनरस्य दुर्निवारप्ररोहस्य मनोरथद्रुमस्य
मन्दाकिनीवचांस्युपघ्नी[3] भवन्ति । अपि च –

---

1. आस्वादयिष्यते सुकृतशाली स जन इति । $म_2$
आस्वादयिष्यति सुकृतशाली, $मु_2$, $अ_1$, $त_2$, $के_1$
आस्वादयिष्यति सुकृती, $मु_1$
2. जगति, $मु_2$, $अ_1$
3. उपवनी, $मु_1$

निश्चिन्वानाः परमसुलभान् तान् तु निर्याति कण्ठात्
भूयो भूयः प्रसभमसवो यत्प्रतिष्ठासमानाः ।
मुख्यो हेतुः पुनरिह तया मुग्धगात्र्या प्रयान्त्या
मुक्ता ये ते वलितवदनं साभिलाषाः कटाक्षाः ॥19॥

(नेपथ्ये)

इदो इदो भट्टिदारिआ ।
[इतः इतः भर्तृदारिका ।]

**मारुतः** – (विलोक्य, सानन्दं)
प्राप्तैवात्र कालिन्दीनवमालिकाभ्यां मन्नयनचकोर-चन्द्रिका मल्लिका ।

(निर्वर्ण्य, सदयं)

हन्तेयं मृदितमृणालनिस्सहाङ्गी
खिन्दाना जघनभरेण दुर्वहेण ।
आयाति स्तनभरभङ्गुरावलग्ना
पादाभ्यां प्रतिनवपल्लवारुणाभ्याम् ॥ 20॥

(आनन्दातिशयं नाटयन्)

स्मरस्याग्नेयास्त्रैः प्रतिहतमियन्तं हि समयं
यदासीदस्तोकव्यसनपरितापार्तिविधुरम् ।
तदस्याः सान्निध्ये शिव शिव कुतोऽपि प्रसृतया
सुधाधोरण्यावप्लुतमिव मनोहर्षुलमहो ॥ 21॥

यावदहं लतागुल्मान्तरितो विस्रब्धमेनां पश्यामि ।

(इति तथा करोति)

(ततः प्रविशति मल्लिका, नवमालिका, कालिन्दी च ।)

**मल्लिका** - (स्वगतं)

अज्ज वि अणासङ्कं हिअअम् ।

(सविस्मयं)

कहं णु दीवंदरे मह पडिच्छन्दो ? सुट्ठु कहिअं कालिन्दीए, जह महाभाअस्सत्ति ।

[(स्वगतं) अद्यापि अनाश्वस्थं हृदयम् । (सविस्मयं) कथन्नु द्वीपान्तरे मम प्रतिच्छन्दः ? सुष्ठु कथितं कालिन्द्या, यथा महाभागस्येति ।]

**सख्यौ** - इदो इदो । [इतः इतः।]

**मारुतः** - (निर्वर्ण्य)

सम्प्रत्यतिशयालुसौन्दर्यमस्या वपुरावेदयति अतिक्रान्तमर्यादमनङ्गविकारम् । तथाहि -

विषयविधुरा दृष्टिः श्वासानिला ग्लपिताधराः
तनुरपि भृशं म्लाना लूनेव पल्लवमञ्जरी ।
अपि च लवलीपाकोद्भेदाभिरामवदावद-
स्फुरति कुचयोर्मूले गण्डे च कश्चन पाण्डिमा ॥22॥

**मल्लिका** - कालिन्दि, सो खु एसो पच्चङ्ग-दंसिअत्थवओअसिहरलआमण्डलो पएसो । जो तुए पुणो पुणो वण्णिओ ।

[कालिन्दि,स खल्वेषः प्रत्यङ्गदर्शितस्तबकानतशिखर - लतामण्डपः प्रदेशः। यस्त्वया पुनः पुनर्वर्णितः।]

**मारुतः** –

अयि पिबतममृतमधुरानालापानसितकमलनयनायाः ।
क्रूरकुहूमुखकूजितनाराचाद्धेजितौ कर्णौ ॥23 ॥

**कालिन्दी** – (स्वगतं)

मण्णे एद्ध कहिंवि लआणिउंजे अल्लीणो मारुओ होज्ज ।

(प्रकाशं)

सहि सच्चं सो एव्व । पेक्ख, महुसमअ-कलमहुअरझंकारसल्लावो मन्दपवणचलिएण किसलअहत्थेण अक्कारइव्व तुमम् ।

[(स्वगतं) मन्येऽत्र कस्मिन्नपि लतानिकुञ्जे आलीनो मारुतो भवेत्। (प्रकाशं) सखि, सत्यं स एव । मधुसमयकलमधुरमधुकर झङ्कारसल्लापो मदनपवनचलितेन किसलयहस्तेनाकारयतीव त्वाम् ।]

**मल्लिका** – ता एद्ध अवचिणुमो कुसुमाइम् ।

[तस्मादत्रापचिनुमः कुसुमानि ।]

(सर्वा पुष्पापचयं नाटयन्ति)

**मारुतः** – (सस्पृहं, मल्लिकां निर्वर्ण्य)

एषा खलु –

उत्तानीकृतवक्त्रबिम्बमुपरिच्योतत्परागोत्कर-
त्रस्ताकूणितलोचनं स्तनभरोदायस्तमध्याङ्कुरम् ।
ईषद्दर्शितनाभितुङ्गजघनक्लान्तोरुपादाङ्गुलि-
व्यासक्तस्थितिलीलयापचिनुते पुष्पं नु चित्तं नु मे ॥24॥

**मल्लिका** - हद्धि, कीस मे अवइआइवि हत्थे णो लगंति कुसुमाइ !
[हन्त, कस्मान्मे अपचितान्यपि हस्ते नो लगन्ति कुसुमानि !]

**नवमालिका** - सहि अण्णहिअआसि । णं अवइदमुक्का णिक्कुसुमा खु एसा वल्ली ।
[सखि, अन्यहृदयाऽसि ! नन्वपचितमुक्ता निष्कुसुमा खल्वेषा वल्ली !]

**मारुतः** - हन्त, निजावयवशोभाविभ्रमैरेव भ्राम्यति मल्लिका ।

तथाहि -

शोणिम्ना करपङ्कजस्य[1] रचयन्त्युल्लासिनः पल्लवान्
स्वच्छाभिर्नखकान्तिभिर्विदधती स्मेरां प्रसूनावलिम्।
तन्वाना तरलैरपाङ्गवलनैः सञ्चारिणः षट्पदान्
मुक्ता पूर्वसमुज्झितामपि पुनर्वल्लीं समालम्बते ॥ 25 ॥

**मल्लिका** - (सलज्जं, परिक्रम्य, लतान्तरमवलम्ब्य ससंभ्रमं)
अह्महे, एदे खु हत्थि उप्पडिहा झंकारमुहरा घोलंति मह वअणंमि दुल्ललिआ चञ्चलिआ ।
[अहो एते खलु झटित्युत्पतिताः झङ्कारमुखरा घूर्णन्ति मम वदने दुर्ललिताश्चञ्चरीकाः ।]

---

1. ° पल्लवस्य, मु,

**मारुतः** – (विलोक्य)

इयमधिकलोभनीया बाला चलहारलुलितकुचकलशा ।
मुखकमलसौरभवलन्मधुकरझङ्कारसंभ्रमविलोला ।। 26 ।।

**नवमालिका** – सहि विहसिदपारिआअकुसुम-सोरभगव्वेण तुह णिस्सासपरिमलेण आअड्डिआ विसज्जिद सहआरचंपअमालईपुण्णाअमुहाणं पुप्फाइं भमन्दि अहिमुहं भमरगणा[1] । ता संच्छादेहि करअलेण मुहंबुअम् ।

[सखि, विहसितपारिजातकुसुमसौरभगर्वेण तव निश्वासपरिमलेन आकृष्टाः विसर्जित-सहकारचम्पकमालती पुन्नागप्रमुखेभ्यःपुष्पेभ्यः भ्रमन्त्यभिमुखं भ्रमरगणाः तस्मात् संछादय करतलेन मुखाम्बुजम् ।]

(मल्लिका तथा करोति )

**मारुतः** – हन्त,

चकितबालकुरङ्गविलोचना करतलेन समावृणुते मुखम् ।
तदपि पङ्कजमाकलयन्नयं भ्रमति भृङ्गगणो भृतझङ्कियः ।।27।।

**मल्लिका** – सहिओ णिवारेह, णिवारेह पुणो वि ण मुञ्चन्ति महुअर हअआ ।

[सख्यौ, निवारयतां, निवारयताम् । पुनरपि न मुञ्चन्ति मधुकरहतकाः ।]

---

1. ° चम्पअकिसरउण्णआरुम्भन्ति अहिमुहंणहंकणम् ।
[ चम्पक केसरपुन्नागाः रुन्धत्यभिमुखं नभोङ्गणम् ।] , मु$_2$

**नवमालिका** - सहि मा मा भीरुआ होहि । एसा अहं णिवारेमि ।

[सखि, मा मा भीरुका भव । एषाऽहं निवारयामि ।]

(इति मल्लिकामालिङ्ग्य पदान्तरं नयति)

**मल्लिका** - (चक्षुरुन्मील्य)

दिट्ठिआ कहं वि णिग्गअम्मि भिङ्गसङ्कडाओ ।

[दिष्ट्या कथमपि निर्गताऽस्मि भृङ्गसङ्कटात् ।]

**कालिन्दी** - सहि, कोमलङ्गि मल्लिए, दिढं खु किलन्तासि कुसुमावअअसंभमेण । ता का एविं वल्लिए सीअलच्छाआसिणिद्धमूलदेसे खणं उवविसह्म ।

[सखि, कोमलाङ्गि मल्लिके, दृढं खलु क्लान्तासि कुसुमापचयसंभ्रमेण । तस्मात् कस्याश्चिद्वल्ल्याः शीतलच्छायास्निग्धमूलदेशे क्षणं उपविशामः ।]

**मल्लिका** -जं दे रोअइ[1] । [यत्ते रोचते ।]

**मारुतः** - सत्यमियं क्लान्तैव । कुतः -

निश्वासोद्गममुल्बणं कथयतः प्रस्पन्दमानौ स्तनौ
ऊर्वोर्वेपथुरूह्यते रुचिरयोरुत्कम्पिना वाससा ।
प्रत्यक्षैव ननु श्रमाम्बुकणिका [2]वत्राम्बुजोद्भासिनी
व्यक्तः पाणितलेऽपि पल्लवसखे लाक्षां विना रक्तिमा ॥28॥

---

1. मु, om the speech 2. नेत्र °, मु,

**कालिन्दी** – सहि, दाहिणेण पेच्छ एसा फलिह-घडिआलवाला तुह माई मल्लिआवेल्ली । जाए मूलम्मि गोरीवअणेण ताएण अमच्चेण लद्धासि ।[1]

[सखि,दक्षिणेन पश्य । एषा स्फटिकघटिताल-वाला तव माता मल्लिकावल्ली । यस्या मूले गौरीवचनेन तातेन अमात्येन लब्धासि ।]

**मल्लिका** – (सस्नेहं, साञ्जलिबन्धं)

अम्ब पणमामि । [अम्ब, प्रणमामि ।]

**मारुतः** – (सबहुमानं)ऋ

अपि पारिजातलतिकामतिशेषे हन्त वल्लि यस्यास्ते ।
जननयनभृङ्गसेव्या कलिका लावण्यमधुमयी सेयम् ॥29॥

**नवमालिका** – भट्टिदारिए एसा खु दरविहसिअकुसुमत्थवअणीसन्दिमअरन्दत्थेवा अङ्कोप-सप्पिणिं तुमं दट्ठूण पस्सुदत्थणी विअ लक्खिज्जइ ता एदाए मूलम्मि चिट्ठह्म ।

[भर्तृदारिके, एषाखलु अर्धविकसितकुसुम-स्तबकनिष्यन्दिमकरन्दबिन्दुरङ्कोपसर्पिणीं त्वां दृष्ट्वा प्रस्नुतस्तनीव लक्ष्यते । तस्मादेतस्या मूले तिष्ठामः ।]

(सर्वा उपविशन्ति)

**मारुतः** – (सौत्सुक्यं)

---

1. मु,om the speech.

परिपाण्डुमनोहराङ्गवल्लीकथितानङ्गरुजो नतभ्रुवोऽस्याः ।
अनुरागनिबन्धनस्य बोधे त्वरते मे हृदयं विलम्बते च ।।30।।

**कालिन्दी** - सहि, कुसुमावअअसमरसंभमणमिओण्ण-मितुङ्गनिबिडघणत्थणभरा असहणवेविरव-लग्गखेदणिज्जन्तमुहचन्दं तुमं परिरद्धुकामो उवसप्प एसो णवणवप्पसूण[1]मअरन्दपरिमल सीअलफ्फस्सो दक्खिणो मारुओ ।

[सखि, कुसुमापचयसमयसंभ्रमनमितोन्न-मिततुङ्ग निबिडघनस्तनभरासहनवेपितलग्न-खेदखिद्यन्मुखचन्द्रां त्वां परिरब्धुकामः उप-सर्पत्येष नवनवप्रसूनमकरन्दपरिमलशीतलस्पर्शो दक्षिणो मारुतः ।]

**मल्लिका** - (सानन्दं)

किं महाभाओ मारुओ ? [किं महाभागो मारुतः?]

(इति ससंभ्रममुत्थातुमिच्छति)

**मारुतः** - (सहर्षं)

अहो प्रसादातिशयो भगवतो मन्मथस्य । यद्विशृङ्खलप्रसराणां मनोरथानामप्यगोचर-मानन्दमनुभावयति ।

(सोच्छ्वासं)

सोऽहं सत्यं जगति सुभगम्भावुको मारुताख्या-
साम्यान्मत्वा[2] मदभिगमनं प्रस्तुते यत्समीरे ।

---

1. प्पसूण, मु$_1$ 2. श्रुत्वा, मु$_1$

उत्तिष्टन्त्याश्चलकुचभरं सम्भ्रमौत्सुक्यहर्ष-
प्रेमव्रीडाशबलनयनं वक्त्रमीक्षे मृगाक्ष्याः ॥ 31 ॥

(सस्पृहं)

सत्यमुक्तं कालिन्द्या मारुतः परिरब्धुकाम इति ।

इमामाकाङ्क्षेऽहं किमपि परिरब्धुं प्रणयिनीं
शनैरारोप्याङ्कं स्मरकुतुकलज्जापरवशाम् ।
इदं पूर्वस्पर्शप्रचुरपुलकोड्डामरघन[1] -
स्तनाभोगां बालामुरसि सदयं निर्दयमपि ॥ 32॥

(विमृश्य, सनिर्वेदं)

हन्त, अकाण्ड एव ताण्डवितं हृदयस्य । ननु परिश्रमालसायाः समीरणागमेऽपि उत्थितः[2] संभाव्यत एव ।

**कालिन्दी** – (मल्लिकायाः स्तनांशुकं धारयति)

सहि मा उट्ठेहि। मा उट्ठेहि। णं मए मन्दाणिलो एव्व वण्णिओ ।
[सखि मा उत्तिष्ठ । मा उत्तिष्ठ । ननु मया मन्दानिल एव वर्णितः ।]

**मारुतः** – (सप्रत्याशं)

किन्नु खल्वेषा वक्ष्यति ।

**मल्लिका** – (सलज्जं सविषादं च)

हला विप्पलद्धह्मि । [हला विप्रलब्धाऽस्मि ।]

---

1. पुलकोद्दामजघन, $मु_2$, $मै_3$ 2. समीरणागम इत्युत्थितिः, $मु_1$

**मारुतः** – (सहर्षं)

उच्छिन्नोऽद्य संशयतन्तुः । हृदय, सत्यास्ते मनोरथाः । पश्य –

कादम्बिनीमिवैनां कामयमानस्य चातकस्येव ।
दिष्ट्या तवानुकूलो मदनो वीरः पुरः समीर इव ॥ 33 ॥

**मल्लिका** –(कालिन्दीकरोल्लसिते स्तनांशुके प्रतिच्छन्दमवलोक्य)

सहि मह विरहकाहरो एसो एव्व सुलहदंसणो मारुओ ण उण सो ।

[सखि, मम विरहकातर एष एव सुलभदर्शनो मारुतः । न पुनः सः ।]

**मारुतः** – (विलोक्य)

सत्यमुक्तं भ्रमरकेण उत्तरीयाञ्चले दृष्टः प्रतिच्छन्द इति ॥

दयितास्तनपरिरम्भ क्रीडास्वच्छन्दमत्प्रतिच्छन्दः ।
सत्यं त्वमेव धन्यो न वयं तद्विरहदहनदग्धाङ्गाः ॥34॥

**नवमालिका** – (निःश्वस्य)

भट्टिदारिए, एमेअ कत्तिओ समओ अदिवाहणिज्जो । णं कसिणवक्खचन्दमुत्तिव्व दिणे अवसिअपरिक्खआ लावण्णमेत्तसेसा एसा दे तणुवल्ली । इदो वरं ण कालक्खेवसहो विरहिजणासु बलामोडिहरणणिग्गिणव्वावारो मम्महो । कालिन्दि, णं जाणीअदि अस्समम्मि जस्सिं दिअहे दिणे

दिणे[1] परिवसिदाअइ गोरीए मुत्तो विअ पसादो[2] विअसिअमन्दमहुरमुद्धमन्थरत्थिमिअतरङ्गिअकूणि-उक्कण्ठिएहिंसविलासघोलिरसिणिद्धकनीनिआचुम्बि-अंचलवहाकुवलइअकवोलमण्डलेहिं उद्दामकोउहल्ल-लज्जाणुवट्टिअ गमणागमणेहिं दिट्ठिवाएहिं तक्काल-सज्जिअमहरद्धअधणुम्मुक्कतणुम्मग्गकलम्बकअम्बअ-पुञ्जसङ्कणिज्जणीरन्धबह्मलपुलउब्भेदजज्जरिज्जन्त-सेअसलिलसंखालिअङ्गराअवाअडला अण्णादिसआए भट्टिदारिआए दिट्ठो तारिसावत्थो एव्व जणणअण-णिम्माणफलं मारुओ। तदप्पहुदि तच्चिन्तालम्बणं हिअअं तप्पडिच्छन्ददंसणालम्बणं णअणं तब्भूसण-धारणालम्बणं सरीरं तल्लाहपच्चासालम्बणं जीविअं धारअन्ती वलित्तवापअत्तविज्जुम्मालेव्व कश्चण-सलाआविअ पडिक्खीणा वि सविसेस रमणिज्जा होइ। अविअ भवणङ्कणचङ्कमणसहचरणपल्लवावि मणिसोपाण-परंपरारोहकम्पिरत्थणरअणभरदूमाविआकोमलो-रुजुअलखेअणीसरन्तणीसासतण्ड विअवेरन्त-लआवल्लवा कीलापव्वअसिहरमारुहिअमज्जणवमुक्काव्व खुरदूलिरेहा सूइअसन्निवेसं तस्स एव्व सिविरपअं पुलोअलन्ती ईसि सुणिज्जन्तगम्भीरमुअङ्ग-घोससाअरदिण्णकण्णा साअरमज्झगज्जन्तजलहर सद्दुल्लासि एव्व सिहण्डिनी किंवि हरिसपरवसा णिप्फन्द विअसिअ लोअणुप्पलकिरणतापिच्छिअ

---

1. खणे खणे, मु,        2. परिवसिदोह्मि अत्तणोवि, मु,

गअणंकणा दिअहे दिअहे सुइरं ठाइ । दूरे खु हिन्दोलगण्डुअगुणणिआमहेसु कीलासाहणेसु वावारो ।

परिअणचलणपडणपत्थण णिव्वन्धेहिं ह्माणादि एवि पवट्टइ । ण भणिदव्वं णिस्सन्दिचछुहार-सबिन्दुकरालजाह्मोवरिससञ्जीविअजीवलोअं चन्दमण्डलं ण पेच्छइत्ति । सेरन्धीकरधिअमङ्गल-फडिआदसिअपडिविंविअं णिअवअणं वि दट्ठुण चन्दभअवेविरङ्गी दीहरदीहरेहिं णीसासपवणेहिं मइलीकरेइ । केलिघरमौत्तिअहित्तिकिरणसंपक्केवि चन्दादवसङ्किणी मुद्धकिसलअकोमलं करअलं आदवत्तं करेइ । रत्तीअरत्तीअ हिमज-लमीसालिअघणसारचच्चिअसीअमअणमणक्कलिअ-कुसुमघलणपाडिअसरीरा उबभाए उत्ताणिअ-करकमलणिहितावाङ्गदेसघोलन्तवाहचिलिचिलिआ-सिञ्चन्तपण्डरगण्डमूलपल्लत्थचिउरंचलं मिलाअन्त-तव्वाहरदूसहणिग्गमनीसासपवणणच्चिअमङ्गल दीवसिहापल्लवं समाणदुःखवरदेवदासअलण-अणणिव्वण्णिअतारिस विअणाविसेसं असम्पत्तच्चि पह्मपडणव्व अवाहि अणिस्सुढा सीढइ । अह कहं कहं वि लद्धणिद्धा सिविणअसंभाविअ पिअसङ्गमा उम्मिसन्तघम्मसलिलसेअपरोहन्तपुलअकण्ठइअ-कलेवराकोमलहत्थजुअलसत्तिअपिहिअघणत्थण-मण्डला ईसिविलम्बिअणीसरन्तसीअलणीसासणि-वेदिआणंदविसेसा खणं णिप्फन्दा होइ । तदो मन्द-मन्दमुक्कसिक्कारजज्जरिअदन्तकुन्दजोण्हाकुसुमिअ-

बिम्बाधरणिरोहवावुडेक्ककरकमला परोप्परनिविड-सङ्घडिअसिज्जन्तपीवरोरुजुअलविलुलिअणिअम्बदुऊल-दरसिढिलणीविबन्धरुन्झणप्पसारिएदरपाणिपल्लवा अपरिप्फुडक्करं किंवि किंवि मन्तअंती पडिवुज्झइ "णाह मारुअ, कीस मां परिरच्चइअ भच्चसि," त्ति वाहरन्तीए एव्व पडिबोहो । एआरिसं तु पच्चक्खं एव्व। पुव्वेज्जू उण अपरह्ले जाला तुमं अस्समं गआसि, ताला साअंतणमज्जाणुत्तिण्णकुसुमउरसुन्दरी-चिउरश्चलसिहरभरमन्धरे तक्कालविघडन्तविअइल-मअणसोरहुंकारझुरझरे फन्दिउं पउत्ते गन्धवह-किसोरे अविण्णादकालणं झत्ति ठिआं कण्ठे मं गाढं गाढं आलिङ्गिअ, "सहि, णोमालिए, मण्णेहि एदं चरमं परिरम्भम् । कहणिज्जो अ तह विहसन्त-पुण्डरीअदलविआललोअणो परव्वसणाणाभिण्णो सो जणो । जह मं जणणंतरे वि अप्पाणुरतहिअअं मण्णे," त्ति बाप्फगग्गअकण्ठी सन्दिसिअ मलणम्मि किअणिच्चआ भवणंकणप्परूढस्स बालकङ्केलिद्दुमस्स तरुणिमगव्विअकेरलविलासिनीदन्तम्बर सोहग्ग-लाहसिलाहणिज्जं झंपन्तचप्पअमञ्जुलसिञ्जिदमुहरं पल्लवकुडुङ्गं करअलेण फस्सिदुं आढन्तवदी ।

[(निःश्वस्य) भर्तृदारिके, एवमेव कियान् समयोऽतिवाहनीयः ? ननु कृष्णपक्षचन्द्रमूर्तिरिव दिने दिने विरहपरिक्षता लावण्यमात्रशेषा एषा ते तनुवल्ली । इतः परं न कालक्षेपसहो विरहिजनासु

बलात्कारहरणनिर्घृणव्यापारो मन्मथः । कालिन्दि, ननु ज्ञायते आश्रमे यस्मिन् दिवसे दिने दिने वरिवसितायाः गौर्याः मूर्त इव प्रसादः विकसित-मन्दमधुरमुग्धमन्थरस्तिमिततरङ्गितकूणितोत्कण्ठितैः सविलासघूर्णनस्निग्धकनीनिकाचुम्बिताञ्चलप्रभाकुवल-यितकपोलमण्डलैः उद्दामकुतूहललज्जा-नवस्थितगमनागमनैर्दृष्टिपातैः तत्कालसज्जित-मकरध्वजधनुर्मुक्तनुर्मग्नकलम्बकदम्बकपुङ्खशङ्क-नीयनीरन्ध्रपक्ष्मलपुलकोद्भेदजर्जरायमाणस्वेदसलिल-संक्षालिताङ्गरागप्रकटलावण्यातिशयाया भर्तृदारिकया दृष्टः तादृशावस्थ एव जननयननिर्माणफलं मारुतः । तदाप्रभृति तच्चिन्तालम्बनं हृदयं, तत्प्रतिच्छन्द-दर्शनालम्बनं नयनं, तद्भूषणधारणालम्बनं शरीरं, तल्लाभप्रत्याशालम्बनं जीवितं धारयन्ती, प्रदीप्त-पावकतप्यमानेव काञ्चनशलाकैव परिक्षीणाऽपि सविशेषरमणीया भवति। अपि च भवनाङ्गणचङ्क्र-मनिस्सहचरणपल्लवाऽपि मणिसोपानपरम्परारोह-कम्पितस्तनजघनभरदूनितकोमलोरुयुगलखेद-निस्सरन्निश्वासताण्डवितपर्यन्तलतापल्लवा क्रीडा-पर्वतशिखरमारुह्य मज्जनावमुक्ताश्वखुरधूलिरेखा-सूचितसन्निवेशं तस्यैव शिबिरपदं पश्यन्ती ईषच्छ्रूयमाणगम्भीरमृदङ्गघोषसादरदत्तकर्णा सागर-मध्यगर्जज्जलधरशब्दोल्लासितेव शिखण्डिनी किमपि हर्षपरवशा निष्पन्दविकसितलोचनोत्पलकिरणता-पिञ्छितगगनाङ्गणा दिवसे दिवसे सुचिरं तिष्ठति ।

दूरे खलु हिन्दोलनकन्दुकगुणनिकामुखेषु क्रीडा-साधनेषु व्यापारः । परिजनचरणपतनप्रार्थननिर्बन्धैरेव स्नानादिकेऽपि प्रवर्तते । न भणितव्यं निष्यन्दि-सुधारसबिन्दुकरालज्योत्स्नावर्षसञ्जीवितजीवलोकं चन्द्रमण्डलं न पश्यतीति । सैरन्ध्रीकरस्थित-मङ्गलमुकुरप्रतिबिम्बितं निजवदनमपि दृष्ट्वा चन्द्रभयवेपमानाङ्गी दीर्घदीर्घैर्निश्वासपवनै-र्मलिनीकरोति । केलिगृहमौलिकभित्तिकिरण-सम्पर्केऽपि चन्द्रातपशङ्किनी मुग्धकिसलयकोमलं करतलमातपत्रं करोति । रात्रौ रात्रौ हिमजल-मिश्रघनसारचार्चिक्यशीतलमणितलकलितकुसुमतल्प-प्रापितशरीरा उपधानोत्तानितकरकमलनिहितापाङ्ग-देशघूर्णमानबाष्पधारासिच्यमानपाण्डरगण्डमूलपर्यस्तचि-कुराञ्चलं म्लायत्ताम्राधरदुःसहनिर्गमनिश्वास-पवननर्तितमङ्गलदीपशिखापल्लवं समानदुःखगृह-देवतासकलनयननिर्वर्णिततादृशवेदनाविशेषं असंप्राप्ताक्षिपक्ष्मपतनैवातिवाहितनिशीथा सीदति । अथ कथं कथमपि लब्धनिद्रा स्वप्नसंभावित-प्रियसङ्गमा उन्मिषद्धर्मसलिलसैकप्ररोत्पुलककण्ट-कितकलेवरा कोमलहस्तयुगलस्वस्तिका-विहितघनस्तनमण्डला ईषद्विलम्बिनिस्सरच्छीत-लनिश्वासनिवेदितानन्दविशेषा क्षणं निष्पन्दा भवति । ततः मन्दमन्दमुत्तसीत्कारजर्जरितदन्त-कुन्दज्योत्स्नाकुसुमितबिम्बाधरनिरोधव्यावृत्तैक-करकमला परस्परनिबिडसङ्घटितस्विद्यत्पीव-

रोरुयुगलविलुलितनितम्बदुकूलदरशिथिलनीवि-
बन्धरोधनप्रसारितेतरपाणिपल्लवा अपरिस्फुटाक्षरं
किमपि किमपि मन्त्रयमाणा प्रतिबुध्यते । "नाथ
मारुत, कस्मान्मां परित्यज्य गच्छसीति",
व्याहरन्त्या एव प्रतिषोधः । एतादृशं तव प्रत्यक्षमेव ।
पूर्वेद्युः पुनरपराह्णे यदा त्वं आश्रमं गतासि, तदा
सायन्तनमज्जनोत्कीर्णकुसुमपुरसुन्दरीचिकुराञ्चल-
शीकरभरमन्थरे तत्कालविघटमानविचिकिल-
मुकुलसौरभोद्गारधुरन्धरे स्पन्दितुं प्रवृत्ते
गन्धवहकिशोरे अविज्ञातकारणं झटित्युत्थाय कण्ठे
मां गाढगाढमालिङ्ग्य, "सखि, नवमालिके, मन्यस्व
एतं चरमं परिरम्भं, कथनीयश्च तथा
विहसत्पुण्डरीकदलविशाललोचनः परव्यसनानभिज्ञः
स जनः । यथा मां जननान्तरेप्यात्मानुरक्तहृदयां
मन्यते इति बाष्पगद्गदकण्ठी सन्दिश्य मरणे
कृतनिश्चया भवनाङ्कणप्ररूढस्य बालकङ्केलीद्रुमस्य
तरुणिमगर्वितकेरलविलासिनीदन्ताम्बरसौभाग्य-
लाभश्लाघनीयं भ्रमत्षट्पदमञ्जुलशिञ्जितमुखरं
पल्लवकुड्मं करतलेन स्प्रष्टुमारब्धवती । ]

**कालिन्दी** – (सबाष्पं, कर्णौ पिधाय)

ण इदोवरं सुणिस्सं साहससीलाए वुत्तन्दम् ।
[नेतः परं श्रोष्यामि साहसशीलायाः वृत्तान्तम् ।]

**नवमालिका** – अह भट्टिदाए जइ एव्वं एदाउण सव्व
पावअं पविसह्म त्ति किअपडिण्णाणं चरणम्बुअ-

पल्लत्थकेसबन्धं पणमन्तीणं अह्माणं सहीणं
णिब्बन्धेण दक्खिणहिअआ कहं वि पच्चाणीदा ।

[अथ भर्तृदारिके, यद्येवमेताः पुनः सर्वाः पावकं प्रविशाम इति कृतप्रतिज्ञानां चरणाम्बुज-पर्यस्तकेसरबन्धं प्रणमन्तीनामस्माकं सखीनां निर्बन्धेन दक्षिणहृदया कथमपि प्रत्यानीता ।]

**मारुतः** - (सानन्दं सकरुणश्च)

अस्या निशम्य निजजीवितनिर्व्यपेक्षा
प्रेमप्रकर्षपिशुना ललिता विचेष्टाः ।
हा हन्त घोरमदनज्वरगाढतप्त-
मामोदते मम मनः परिदूयते च ॥ 35 ॥

(पुनः सकरुणं)[1]

अहो महानयं प्रमादः ।

नवकिसलयमुग्धं गात्रमेतन्मृगाक्ष्याः
पवनचलितजातीसूनपाता[2]सहिष्णु ।
अपि कुलगिरिकूटस्थेमभाजां जनानां
असुविमथनचण्डा मान्मथास्ते पृषत्काः ॥36॥

**नवमालिका** - किं बहुणा ? पुणो पुणो पट्ठाणंमुहं कण्ठलग्गं जीविअं वि एसो महाभाअविसाल-

---

1. om. पुनः सकरुणं, $मु_1$, $के_{1-2}$ 2. पातात्, $मु_1$

वच्छत्थलसंसग्गसूहवो हारो एव्व सअं वि
कण्ठलग्गो रुन्धेइ ।

[किं बहुना ? पुनः पुनः प्रस्थानोन्मुखां कण्ठलग्नजीवितामपि एष महाभागविशाल-वक्षःस्थलसंसर्गसुभगो हार एव स्वयमपि कण्ठलग्नो रुणद्धि ।]

(इति मल्लिकायाः कण्ठे हारं दर्शयति)

**मारुतः** – (सस्पृहं)

ब्रूहि ब्रूहि प्रियसख ममाप्यम्बुभाजा त्वया प्राक्
मुक्ताहारस्थिरविरचितं तत्तपस्याप्रकारम् ।
येनोत्कण्ठाधवलिमधुरे कण्ठमूलेऽनुषक्तः
सारङ्ग्याक्ष्या[1] स्पृशसि हृदयं श्लिष्यमाणस्तनाभ्याम् ॥37॥

**नवमालिका** – (अञ्जलिं बद्ध्वा, मल्लिकां प्रति)

सहि, पसिअ । णं कुलअण्णआणं वि गन्धव्वविवाहा सुणिज्जन्ति तेसु तेसु इतिहासेसु । ता पेसिणिज्जा अहं कालिन्दी वा आणइस्सामो गूढं तुह हिअअवल्लहं जणम् ।

[सखि, प्रसीद । ननु कुलकन्यकानमपि गान्धर्वविवाहाः श्रूयन्ते तेषु तेष्वितिहासेषु । तस्मात्प्रेषणीयाऽहं कालिन्दी वा आनयिष्यामो गूढं तव हृदयवल्लभं जनम् ।]

---

1. सारङ्गाक्ष्या, मु$_1$, त$_2$, अ$_1$

**मल्लिका** – (सनिःश्वासं)

अपरिक्खिदाणुराए तस्सिं जणे कहं णु पेसिज्जइ जइ सो अण्णसङ्कन्तहिअओ भवेत्। ता णो वरयत्तचावलं एव्व सिण्णइ।

[अपरीक्षितानुरागे तस्मिन् जने कथं नु प्रेष्यते, यदि स अन्यसङ्क्रान्तहृदयो भवेत्। तस्मान्नः प्रयत्नचापलमेव शिष्यते।]

**मारुतः** – (सानुक्रोशं)

मा मा त्वदेकजीवितं आशङ्केथास्त्वमन्यसक्तं माम्।
इच्छत्येरण्डलतां लोलम्बः किन्नु कमलिनीं लब्धुम् ॥ 38 ॥

**कालिन्दी**– (स्वगतं)

एदाए अप्प णअणेहिं अ दट्ठुण, सव्वहा ण पच्चयो होइ।

(प्रकाशं)

णं भणामि पआसिदं एव्व अणुराअसव्वस्सं पुणो सिहामणिदाणेणेत्ति।

[(स्वगतं) एतस्या आत्मनयनाभ्यां च दृष्ट्वा सर्वथा न प्रत्ययो भवति। (प्रकाशं) ननु भणामि प्रकाशितमेव अनुरागसर्वस्वं पुनः शिखामणि-दानेनेति।]

(शिखामणिं करतलेन परामृश्य तदिदं हाटकस्येति पठति।)

**मारुतः** – (सविस्मयं)

अहो विधेरतिदुर्घटस्यापि घटने पटीयस्ता । क्वायं सिंहलद्वीपस्थो मणिः क्वेयं मगधपुरमण्डनं मल्लिका ।

(मणिं प्रति)

आवां द्वावपि रक्तौ तव पुनरन्या शिखामणे नियतिः ।
यत्सुरभिनीलमस्याः कराञ्चलेनालकान्तमामृशसि ॥ 39 ॥

(नेपथ्ये)

कालिन्दि, अत्थि भअवईए आदेसो ।

[कालिन्दि, अस्ति भगवत्या आदेशः ।]

**सर्वाः** – (आकर्ण्य)

सारसिआए विअ सरो ।

[सारसिकाया इव स्वरः ।]

**कालिन्दी** – मण्णे भअवईए आहूदह्य । ता झत्ति गच्छह्म ।

[मन्ये भगवत्या आहूता स्मः । तस्मात् झटिति गच्छामः ।]

**मारुतः** – (आकर्ण्य, सविषादं)

अहो विधेर्वैलोम्यम् । येन[1]–

तृषितचकोरकचञ्चु[2]पतिता [3]चन्द्रिकेव जलधरेण[4] ।
अपनीयतेक्षिपथतश्चिर[5]काङ्क्षितलब्धदर्शना सुमुखी[6] ॥40॥

---

1.om. येन, मु$_1$, के$_1$, के$_2$, म$_2$
2. चञ्चौ, मु$_1$, अ$_1$, मै$_1$
3.add यत्, म$_1$,म$_2$,मै$_2$,मै$_4$,के$_1$,के$_2$,मु$_1$
4. जलदेन, म$_1$,म$_2$,मै$_2$,मै$_4$,के$_1$,के$_2$,मु$_1$
5. नयनपथाच्चिर, त$_2$, मै$_1$, मै$_2$, अ$_1$
6. मल्लिका, त$_2$, मै$_1$, मै$_2$, अ$_1$

(सर्वा निष्क्रम्य लतागुल्मान्तरिता प्रविशन्ति)

**मल्लिका** – कालिन्दि, अवि सच्चं मारुओ एत्थ वट्टइत्ति ?
[कालिन्दी, अपि सत्यं मारुतः अत्र वर्तत इति?]

**कालिन्दी** – कहं अण्णहा भणिस्सदि सारसिका ?
[कथमन्यथा भणिष्यति सारसिका ?]

**नवमालिका** –सहि अज्ज सोमसरम्मि ह्णातुं गच्छन्तीए एदाए किं णु खु तुह कण्णे कहिअम् ?
[सखि, अद्य सोमसरसि स्नातुं गच्छन्त्या एतया किन्नु खलु तव कर्णे कथितम्?]

**कालिन्दी** – (स्वगतं)
ण कहइस्सं सम्बरअस्स अविणअं। उब्भिण्णं खु मन्तबीजं ण फलस्स कप्पइ।
(प्रकाशं)
णं एदं एव्व अदिमुत्तलआमण्डवे णिऊढो वट्टइ त्ति।
[(स्वगतं) न कथयिष्यामि शम्बरकस्याविनयम्। उद्भिन्नं खलु मन्त्रबीजं न फलाय कल्पते। (प्रकाशं) नन्वेतदेव अतिमुक्तलतामण्डपे निगूढो वर्तत इति।]

**मारुतः** – हन्त, गतैव मल्लिका ससखी।
(निर्गच्छति)

**मल्लिका** – (दृष्ट्वा, सहर्षं)

हन्त, जलहरमण्डलादो विअ चन्दो णिग्गओ लआमण्डवादो मारुओ ।

(साशङ्कं)

हन्त, एक्को एव्व ।

[(दृष्ट्वा, सहर्षं) हन्त जलधरमण्डलादिव चन्द्रो निर्गतो लतामण्डपान्मारुतः । (साशङ्कं) हन्त, एक एव ।]

**कालिन्दी** - णं हिअअमण्डवसञ्चारिणीए पिअसहीएए एव्व स सहाओ मारुओ ।

[ननु हृदयमण्डपसञ्चारिण्या प्रियसख्यैव ससहायो मारुतः ।]

**मल्लिका** - (सानन्दं)

अहो मणोहराणं अदिप्पसङ्गो ।

[अहो मनोरथानामतिप्रसङ्गः ।]

**कालिन्दी** -को एत्थ अदिप्पसङ्गो ? णं तुमं एव्व दट्ठुकामो वज्जिअसअलपरिअणो लआमण्ड-वणिऊढो एत्थ एक्को एव्व वट्टइ ।

[कोऽत्रातिप्रसङ्गः? ननु त्वामेव द्रष्टुकामो वर्जितसकलपरिजनः लतामण्डपनिगूढोऽत्र एक एव वर्तते ।]

**मल्लिका** - (सानन्दं)

हुं। जइ एव्वं आअण्णिदाइ खु तेण धीरहिअएण ताणि[1] चवलाइं अह्माणं वअणाइ ।

---

1.All mss and ed. read तेण [तेन] . Suggested reading, ताणि [तानि]

[हुम्। यद्येवं आकर्णितानि खलु तेन धीरहृदयेन तानि चपलान्यस्माकं वचनानि ।]

**नवमालिका** –सहि, अह्मे वि सुणिस्सामो । एदस्स मअणज्जरगाढतत्तस्य तारिसाइं एव्व वअणाइम् ।

[सखि,वयमपि श्रोष्यामः । एतस्य मदनज्वर-गाढतप्तस्य तादृशान्येव वचनानि ।]

**मल्लिका** – (सप्रत्याशं)

अवि एव्वं,

(निर्वर्ण्य)

सहि अज्ज पडिच्छन्दं अणुहरइ एसो ।

[(सप्रत्याशं) अप्येवं (निर्वर्ण्य) सखि, अद्य प्रतिच्छन्दमनुहरत्येषः ।]

(संस्कृतमाश्रित्य वर्णान्तरेणेति पठति ।)

**मारुतः** – (सोत्कण्ठं)

प्राथमिकी घनवृष्टिः प्राप्ता शिखिनो निदाघतप्तस्य ।
आकस्मिकेन सा पुनरपनीता क्वापि पवनेन ॥ 41 ॥

**नवमालिका** –सहि अवि सुदं महाभाअस्य वअणम् ?

[सखि, अपि श्रुतं महाभागस्य वचनम् ?]

**मल्लिका** – णोमालिए ! अणिब्भिण्णाभिप्पाअं खु एदंम् ।

[नवमालिके ! अनिर्भिन्नाभिप्रायं खल्वेतत् ।]

**मारुतः** – (स्मरपीडां नाटयन्)

याववत्तस्याः चरणाम्बुजाक्रान्तदेशमाश्रयामि ।

**मल्लिका** – (साशंसं)

का णाम तच्छद्देण संभाविअइ ?

[का नाम तच्छब्देन संभाव्यते ?]

**मारुतः** – (परिक्रम्य)

अत्र कुसुमान्यपचितानि मल्लिकया ।

**मल्लिका** – (सपुलकं, स्वगतं)

अह्महे मह णाम्गहणमेत्तण रोमञ्चिआ तणुयट्टी ।

[अहो मम नामग्रहणमात्रेण रोमाञ्चिता तनुयष्टिः ।]

**मारुतः** –

एता धन्यतमा लता नखमुखैः सूनानि संगृह्णती
सा सर्वाङ्गसुगन्धिरिन्दुवदना या स्पृष्टवत्यात्मना ।
वृन्तग्रन्थिषु तत्र तत्र लगतामद्यपि माध्वीलिहां
रावैर्हन्त रुदन्ति तत्करतलस्पर्शेन दूरीकृताः ॥42॥

**मल्लिका** – महुरमहुरं वण्णिउं जाणाइ महाभाओ ।

[मधुरमधुरं वर्णयितुं जानाति महाभागः ।]

**मारुतः** – (अधो विलोक्य)

लाक्षाङ्कैरनुमीयते तत इतः सुव्यक्तमग्राङ्गुलि-
न्यासैरत्र लताग्रपुष्पहरणे यत्तत् पदाग्रस्थितम् ।

(अन्यतो विलोक्य)

एता हन्त परिच्च्युता सुमनसो मत्तालिमालाभय-
व्याधूतात् करपल्लवादिह पुनस्तस्याः कुरङ्गीदृशः ॥43॥

**मल्लिका** - (सलज्जस्मितं)

अह्महे सव्वं पच्चक्कीकिअं एव्व महाभाएण ।

[अहो सर्वं प्रत्यक्षीकृतमेव महाभागेन ।]

**नवमालिका** - सहि, किं अज्जवि अणिब्भिण्णो एव्व अहिप्पाओ ।

[सखि, किमद्यापि अनिर्भिन्न एवाभिप्रायः ?]

**मल्लिका** - सव्वाआरमहुरस्स णिसग्गपेसलेहिं आलावेहिं ण संकिज्जइ उब्भिण्णो वि णिण्णेदुम् ।
[सर्वाकारमधुरस्य निसर्गपेशलैरालापैर्न शक्यते उद्भिन्नेऽपि निर्णेतुम् ।]

**मारुतः** - (स्मृत्वा) अयि प्रियतमे मल्लिके, सर्वथाऽनाश्वासशीलाऽसि। यतस्त्वत्कटाक्षलव-प्रतीक्षस्यापि मम हृदयमन्यसङ्क्रान्तमाशङ्कसे ।

**सख्यौ** - सुणादु तम्मुहादो एव्व पिअसही ।

[श्रृणोतु तन्मुखादेव प्रियसखी ।]

**मल्लिका** - (सहर्षं)

महाभाअ, अज्ज आसासिदं एव्व जं पिअदमासद्देण अक्कारिदह्मि ।

[(सहर्षं) महाभाग, अद्य आश्वासितैव यत् प्रयतमाशब्देनाकारिताऽस्मि ।]

**मारुतः** – तदिदं त्वदङ्केष्वेव परिवर्तमानं कथं नाम न जानीषे । तथा हि मे,

लग्नं पादतले नखेषु विलुठ[1]त्संसक्तमूर्वोर्युगे
विश्रान्तं जघनस्थले निपतितं नाभीसरोमण्डले ।
सूक्ष्मं[2] मध्यमवेक्ष्य रोमलतिकामालम्बमानं क्रमा-
दारूढं स्तनयोः प्लुतं नयनयोर्लीनं मनः कैशिके ॥44॥

**मल्लिका** – (आकाशे)

भअवं णिक्कारणकारुणिअ रइरमण ! पमज्जिओ एव्व तुए अवलाजणदंसिएक्कंतणिट्ठुरत्तणणिरूढो पवादो जेण एव्वं विहाणि पणअवअणाणि सुणावेसि ।

[भगवन् , निष्कारणकारुणिक, रतिरमण ! प्रमार्जित एव त्वया अबलाजनदर्शितै-कान्तनिष्ठुरत्वनिगूढोपवादः, येनैवंविधानि प्रणयवचनानि श्रावयसि ।]

**मारुतः** – (परिक्रम्य)

तदेतत् प्रियतमावस्थानधन्यं लतामूलम् । यत्र नवमालिकया वर्णितो रमणीयो धृतिकम्पदश्च तस्या मान्मथो व्यतिकरः । यावदत्रोपविशामि ।

(उपविश्य,[3] सनिःश्वासं)

---

1. नखेन्दुषु लुठन् , के$_2$ 2. शून्यं, मु$_1$,मु$_2$,म$_1$,मै$_{1-4}$
3.om उपविश्य, मु$_1$

सखि, नवमालिके !

**नवमालिका** – भट्टिदारिए, ण सक्कुणोमि महाभाएण गहिअणामा वि आणवेहित्ति उपसप्पिदुम् । [भर्तृदारिके, न शक्नोमि महाभागेन गृहीतनामाऽपि आज्ञापयत्युपसर्पितुम् ।]

**मल्लिका** – मा मा पआसेहि । सुणिस्सामो खणं एदस्स वीसम्भालावम् ।
[मा मा प्रकाशय । श्रोष्यामः क्षणमेतस्य विस्रम्भालापम् ।]

**मारुतः** – पश्य ते प्रियसख्याः उपालम्भम् । यत्, परव्यसनानभिज्ञं मां मन्यते । [1]मन्यते पुनः [2]ममाप्यवाङ्मनसगोचरममुमनङ्गज्वरोद्दाहम् ।

मया विश्रूयन्ते श्रवणपरुषा कोकिलरवाः
समीरा सह्यन्ते चलितनवमाकन्दकलिकाः ।
तथा निस्तीर्यन्ते निशि निशि सुधापिच्छिलकरे
समिन्धाने चन्द्रे कति कति न मूर्च्छाव्यतिकराः ॥45॥

**मल्लिका** – (सानुतापं)
अह्महे, मह किदे तेल्लोकममङ्गलसुन्दराङ्गस्स एअस्स एआरिसं वसणं ति ण जाणिदं मए ।

(निःश्वस्य)

अहवा जाणन्तीं वि किं करेमि ?

---

1. add न, $मु_1$ 2. add मुग्धा, $मु_2$

[(सानुतापं) अहो मम कृते त्रैलोक्य-मङ्गलसुन्दराङ्गस्य एतस्य एतादृशं व्यसनमिति न ज्ञातं मया। (निःश्वस्य) अथवा जानन्त्यपि किं करोमि?]

**नवमालिका** - (जनान्तिकं)

कालिन्दि, एसा खु भट्टिदारिआ पच्चक्खिअ-मारुआणुराआ वि गुरुअणवसे वट्टन्ती ण पारेइ सअं एव्व अप्पाणं समप्पिदुम्।

[(जनान्तिकं) कालिन्दि, एषा खलु भर्तृदारिका प्रत्यक्षितमारुतानुरागापि[1] गुरु-जनवशे वर्तमाना न शक्नोति स्वयमेवात्मानं समर्पयितुम्।]

**कालिन्दी** - (स्वगतं)

जुज्जइ सारिसं खु एदं विसुद्धस्स कुलकण्ण-आसहावस्स। अवि दु कालक्खेवासहो मअरद्धओ। ता एव्वं भणिस्सम्।

(प्रकाशं)

सहि मल्लिए, एव्वं अणुरत्तो तुइ सअलजणणअणाणंदो महाकुलप्पसूदो मारुओ पलआणक्कप्पकन्दप्पसरपडणढज्जान्तसुउमा-रङ्गो बलिअं खु किलम्मइ। ता जइ खणं वि उवक्खिज्जइ। मण्णे अणुवद एव्व मोहो वा अण्णं किं वि वा भविस्सदित्ति।

---

1. om अपि, मु₁

[(स्वगतं) युज्यते । सदृशं खल्वेतद्विशुद्धस्य कुलकन्यकास्वभावस्य । अपि तु कालक्षेपा-सहो मकरध्वजः । तस्मादेवं भणिष्यामि । (प्रकाशं) सखि, मल्लिके, एवं अनुरक्तस्त्वयि सकलजननयनानन्दो महाकुलप्रसूतो मारुतः प्रलयानलकल्पकन्दर्पशरपतनदह्यमानसुकुमाराङ्गो बलवत्खलु क्लाम्यति । तस्माद्यदि क्षणमप्युपेक्ष्यते मन्येऽनुपदमेव मोहो वा अन्यत्किमपि वा भविष्यतीति ।]

**मल्लिका** – (सखेदं)

मा मा अमङ्गलाइ सङ्केहि ।

[(सखेदं) मा मा अमङ्गलानि शङ्कस्व ।]

(इति सबाष्पं ध्यायति)

(प्रविश्य चित्रफलकहस्तः)

**भ्रमरकः** – णाह दिव्वगन्धेण लोआ मां जाणइत्ति मालिआ णाणीदं व । चित्तफलअं उण एदम् ।

[नाथ दिव्यगन्धेन लोको मां जानात्विति मालिका नानीतैव । चित्रफलकं पुनरेतत् ।]

(इत्यर्पयति)

**मारुतः** – भ्रमरक, उपायज्ञोऽसि ।

(इति चित्रफलकमादाय)

यावत् क्षणलब्धप्रियतमादर्शनयोर्दृशोर्युगमा-नन्दयामि तत्प्रतिच्छन्ददर्शनेनापि ।

(इति निर्वर्तयति)

**कालिन्दी** - मण्णे तं एव्व एदं चित्तरअणं भमरएण कहिअम् ।

[मन्ये तदेवैतच्चित्ररत्नं यद्भ्रमरकेण कथितम् ।]

(सर्वा सविस्मयं पश्यति)

**नवमालिका** - पेच्छ, पेच्छ अच्चेरं विअडसिङ्ग-सहस्समण्डिओ कोवि गिरिन्दो लिहिओ ।

(पुनर्निर्वर्ण्य)

तण्णिदम्बदेसक्खलिअ विमलसलिलो कोवि णिज्झरो वि ।

(सहर्षं)

एतस्स उण तीरुज्जाणघरम्मि अदिट्ठअरीहिं दिव्व- रूवाहिं सहअरीहिं परिवुदा पिअसही वि एसा ।

[पश्य पश्य आश्चर्यम् । विकटशृङ्गसहस्र-मण्डितः कोपि गिरीन्द्रो लिखितः । (पुनर्निर्वर्ण्य) तन्नितम्बदेशस्खलितविमलसलिलः कोऽपि निर्झरोऽपि । (सहर्षं) एतस्य पुनः तीरोद्यानगृहे अदृष्टचरीभिर्दिव्यरूपाभिः सहचरीभिः परिवृता प्रियसख्यप्येषा ।]

**मारुतः** - भ्रमरक, एतद्दर्शनादारभ्य विस्मयस्तिमितं मे हृदयम् । कथं द्वीपान्तरस्थेन चित्रकरेण मल्लिका दृष्टा, कथञ्च सा दिव्यजनचङ्क्रमोचिते पर्वते लिखितेति । पश्य-

शैलेन्द्रो हिमवानयं प्रतितटं विद्याधरैराश्रितः
क्रीडद्दिग्गजदण्डदानकलुषा सेयञ्च भागीरथी ।
अस्यास्तीरलतागृहे पुनरसौ मध्येसखीमण्डलं
क्लान्ता कन्दुकखेलनेन लिखिता मज्जीवितं मल्लिका ॥46॥

**मल्लिका** – (सोत्कण्ठास्मरणं)
अह्महे चिरपरिइओ विअ एसो पदेसो एदाओ पिअसहीओ ।
[अहो, चिरपरिचित इव एष प्रदेशः । एता अपि प्रियसख्यः । ]

**नवमालिका** – (सासूयमिव)
अह्मे कहं ण लिहिआ एत्थ सहीमण्डले ?
[अहो कथं न लिखितात्र सखीमण्डले?]

**भ्रमरकः**:- सच्चं भणिअं णाहेण गन्दुअखेलणेण किलन्तेति । एदाए उण पल्लवपाडलम्मि करअले कमल विअ राअहंसो लक्खिज्जइ मोत्तिअगन्दुओ ।
[सत्यं भणितं नाथेन कन्दुकखेलनेन क्लान्तेति । एतस्याः पुनः पल्लवपाटले करतले कमल इव राजहंसो लक्ष्यते मौक्तिककन्दुकः ।]

**मारुतः** - (निर्वर्ण्य, सस्पृहं)
विश्लिष्यन् पतयालुरंसविधृतो धम्मिल्लभारो महान्
घर्माम्बुच्छुरितं मुखं स्तनतटोद्भिन्नच्युता कञ्चुली ।
नीवी किञ्चिदिव श्लथा मणिमयी विभ्रंशिनी मेखला
क्रीडान्ते सविशेषसुन्दरमिदं तन्व्या वपुलीक्ष्यते ॥47॥

**नवमालिका** – भट्टिदारिए, एदं दट्ठुण अह्माणं कीलापव्वअखेलणाणि सुमरिङज्जन्ति ।
[भर्तृदारिके, एतद्दृष्ट्वा अस्माकं क्रीडापर्वत-खेलनानि स्मर्यन्ते ।]

**मारुतः** – (समदनोन्मादं)
अस्याः खलु –

खिन्नालसनयनान्तं स्विन्नालिकलग्नकुन्तलस्तबकम् ।
वदनमवलुप्ततिलकं मदनं नेदयति दवयति धृतिं मे ॥48॥

**मल्लिका** – (सेर्ष्यं परावृत्य)
सहिओ अवि सच्चं अहं एव्व लिहिदह्मि ?
[सख्यः, अपि सत्यमहमेव लिखिताऽस्मि ? ]

**नवमालिका**[1] – (जनान्तिकं)
कालिन्दि, वेच्छणिअं वि पडिच्छन्दं अण्णेत्ति संकन्ती ईसासमुण्णमिदभुमआलआकलङ्किअसुन्दर-वअणकमला भट्टिदारिआ ।

(प्रकाशं)

अदिमाणिणि, मा कुप्प मा कुप्प, किं ण दिट्ठा वामकुअकुम्भपल्लत्था सहआ मालिआ ।

[(जनान्तिकं)कालिन्दि, दर्शनीयमपि प्रति-च्छन्दं अन्यदिति शङ्कयन्ती ईर्ष्यासमुन्नमित-भ्रूलताकलङ्कितसुन्दरवदनकमला भर्तृदारिका ।

1. add सस्मितं, $त_2$

(प्रकाशं) अतिमानिनि, मा कुप्य ना कुप्य, किं न दृष्ठा वामकुचकुम्भपर्यस्ता सहजा मालिका ?]

**मल्लिका** – (विलोक्य, सलज्जं)

हत्थि, जाणिदो एदाहिं मह ईसाकलुसिदो भावो ।

[हन्त, ज्ञातमेताभिर्ममेर्ष्याकलुषितो भावः ।]

**मारुतः** – (सानुकम्पं)

हन्त, न विरमत्यस्याः परिश्रमः । भ्रमरक, आनीयतां नातिदूरभाजः सोमसररसः कमलिनीदलानि । यावदहं शनैर्वीजयामि . ।

**सख्यौ** – भट्टिदारिए, दिट्ठिआ वड्ढामो । महाभाओ परिअणो विअ तुह वीअणंमि पवट्टइ ।

[भर्तृदारिके, दिष्टया वर्धामहे । महाभागः परिजन इव तव वीजने प्रवर्तते ।]

**मल्लिका** – अहं विअ एसो वि सच्चं पडिच्छन्दं मण्णेइ ।

[अहं इवैषोऽपि सत्यं प्रतिच्छन्दं मन्यते ।]

**भ्रमरकः** – (सविषादं)

णाह, चित्तं खु एदम् ।

[नाथ, चित्रं खल्वेतत् ।]

**मारुतः** – भ्रमरक, सत्यमात्थ ।

**क्वचिदभ्रं क्वचन घनः क्वापि सरोऽन्यत्र कुवलयद्वन्द्वम् ।**
**एकत्र चापवल्ली परत्र मौर्वीति चित्रमेवेदम् ॥ 49 ॥**

**मल्लिका** – (स्वगतं)

हन्त, अज्ज वि ण णिवुत्तो । एव्वं अणुरत्त-पच्छागदुअ परिद्धुकामह्मि ।

[हन्त, अद्यापि न निवृत्तः । एवमनुरक्तं प्रत्यागत्य परिरब्धुकामास्मि ।]

**सख्यौ** – सखि, अज्ज तुमं एव्व परव्वसणं ण जाणासि ।

[सखि, अद्य त्वमेव परव्यसनं न जानासि ।]

**भ्रमरकः** – णाह णं भणामि पडिच्छन्दो एसो त्ति ।

[नाथ ननु भणामि प्रतिच्छन्दः एष इति ।]

**मारुतः** – (सखेदं)

किं प्रतिच्छन्द एव ? हन्त !

अतिदुर्लभां सुधांशोरम्भः प्रतिबिम्बितां मूर्तिम् ।
चापलमस्यानुकृतवान् बालस्यादातुकामस्य[1] ॥ 50॥

(सोत्कण्ठामोहसन्तापं)

आश्लिष्टः प्रलयानलैः[2] किमथवा स्पृष्टः पटीरानिलैः
अहोस्वित् परितो वृतोऽस्मि सकलैः संभूय चन्द्रातपैः ।
जाने नाहमर्किपचानविभवः कोप्ययङ्गमङ्गं दहन्
रुन्धानः [3]करणान्युदेत्य विरतं तापो नु मोहो नु वा ॥51॥

---

1. दुर्लभममृतांशुमूर्तिमम्भप्रतिबिम्बतामादातुकामस्य
बालस्य चापल मनुकृतवानस्मि ।$मु_2$, $त_2$
अतिदुर्लभाममृतांशुमूर्तिमम्भप्रतिबिम्बितामादातुकामस्य ।
किमथवा स्पृष्टः बालकस्य चापलमनुकृतवानस्मि ॥ $अ_1$

2. ° निलैः, $म_1$ 3. क्रिणान्, $मै_2$

(सोन्मादं)

भ्रमरक, कोऽयं प्रदेशः ?

**सर्वाः** – (सावेगं)

अह्महे महन्तो खु पमादो ।

[अहो महान् खलु प्रमादः ।]

**मल्लिका**– सहीओ ण जाणे किं मए दाणिं कादव्वंति ।

[सख्यः, न जाने किं मयेदानीं कर्तव्यमिति ।]

**भ्रमरकः** – (सभयं)

णं वसन्तवणुज्जाणं एव्व ।

[ननु वसन्तवनोद्यानमेतत् ।]

**मारुतः** – (परितो विलोक्य)

युज्यत एतत् । अयमयं हि तरुणमाकन्द-
तरोर्मूले,

सन्धाय पञ्चमास्त्रं झङ्कुर्वन् मौर्वीकार्मुकं मदनः ।
कर्षति रतिकुचमण्डलकाठिन्याद्वैतसाक्षिणा दोष्णा ॥52॥

असुहरणोद्यतमेनं यावत् क्षणविलम्बाय प्रार्थये ।

(साञ्जलिबन्धं)

अयि शृणु चरमं मे प्रार्थनं पुष्पकेतो
क्षणमिव विरमास्मादुद्यमादञ्जलिस्ते ।
सकृदवहितबुद्धिस्ताम्रदन्ताम्बरं तद्-
वदनमलसनेत्रं मल्लिकायाः स्मरामि ॥ 53॥

(इति नयने निमीलयन् मोहं नाटयति)

**मल्लिका**- (सकरुणनुरागसंभ्रमावेगं)
हन्त, मुज्झन्तो विअ दीसइ ।
[हन्त,मुह्यन्निव दृश्यते ।]
(सर्वा सत्वरमुपसर्पन्ति)

**सख्यौ** - सहि, धारेहि उच्चङ्गेण ।
[सखि, धारयोत्सङ्गेन । ]

**मल्लिका** - सपुलकमङ्गे धारयति)

**भ्रमरकः** - (दृष्ट्वा, सानन्दं, प्रणम्य, स्वगतं)
एदा वि इहच्चिअ ठिआ ।
(प्रकाशं)
दिट्ठिआ सम्पत्ताहो तत्तहोदीओ ।
[(दृष्ट्वा, सानन्दं, प्रणम्य, स्वगतं) एताऽपि इहैव स्थिताः ! (प्रकाशं) दिष्टया सम्प्राप्ताः तत्रभवत्यः ।]

**कालिन्दी** - णोमालिए, रअलमड्डिअ कप्पूरपल्लव-सारेण णिडालदेसे लिम्पामो ।
[नवमालिके, करतलमर्दितकर्पूरपल्लवसारेण ललटदेशे लिम्पावः ।]
(उभे तथा कुरुतः ।)

**भ्रमरकः** - णाह पडिबुज्झस्स। मं तत्तहोदीए मल्लिआए सअं धारिओसि । पुव्वं वि तेसु तेसु मुज्झाअमेसु एदाए णामग्गहणमेत्तोणेव पडिबुज्झसि ।

[नाथ, प्रबुध्यस्व । ननु तत्रभवत्या मल्लिकया स्वयं धृतोऽसि । पूर्वमपि तेषु तेषु मूर्च्छागमेष्वेतस्याः नामग्रहणमात्रेणैव प्रतिबुध्यसे ।]

**मल्लिका** – (सकम्पं, करतलं वक्षसि निधाय)
महाभाअ, किं ण सुणिज्जइ भमरअस्स वअणम् ।
[महाभाग, किं न श्रूयते भ्रमरकस्य वचनम् ?]

**मारुतः** – (प्रबुध्यमानः, सरोमाञ्चं , स्वगतं)
स्पर्श एष हृद्दयङ्गमः सुधावर्षवद्धपुषि को विभाव्यते ।
चन्द्रचन्द्रमणिहारमालतीगन्धसारघनसारशीतलः ॥ 54॥

(चक्षुषी उन्मील्य पश्यति)

**सख्यौ** – सहि, दिट्ठिआ वड्ढामो । जोण्हालिङ्गिओ विअ कुमुदाअरो पडिबुज्झो महाभाओ ।
[सखि, दिष्टया वर्धामहे । ज्योत्स्नालिङ्गित इव कुमुदाकरः प्रतिबुद्धो महाभागः ।]

(सर्वा हर्षं नाटयन्ति)

**भ्रमरकः** – (सानन्दं)
णाह, मुज्झाअमेण णिमीलिए एव्व लोअणेसु इमाओ वल्लीणिउञ्जादो झत्ति सदअसंभमं आगदुअ लम्बिओसि तत्तहोदीए ।
[नाथ, मूर्च्छागमेन निमीलितयोरेव लोचनयोः इमा वल्लीनिकुञ्जाज्झटिति सदयसंभ्रममागत्य लम्बितोऽसि तत्र भवत्या ।]

(मल्लिका लज्जां नाटयति)

**मारुतः** – (सहर्षं)[1]

हन्त, न गतमेताभिः !

उपकृतमयि मूर्च्छे यत्त्वया स्वीकृतेम-
ऱ्यगणितगुरुशङ्काव्रीडमासाद्य सद्यः ।
वहलपुलकपालीपक्ष्मलोत्तुङ्गपीन-
स्तनकृतपरिरम्भं कातराक्ष्या धृतोऽस्मि ॥55॥

(नेपथ्ये)

भो भो जनाः, पलायध्वं पलायध्वम् ।

एतौ द्वाववितर्कितावतिमदौ विद्राविताधोरणौ
धावंधावमितस्ततः पथिजनान्व्यापादयन्तौ रुषा ।
वेतण्डौ पृथुदन्तदण्डविकटावुच्छृङ्खलावेनयो-
रेकः सोमसरः परस्त्विह वसन्तोद्यानमाढौकते ॥56॥

(सर्वे आकर्ण्य ससंभ्रममुत्तिष्ठन्ति ।)

**मारुतः** – (विलोक्य)

अतिकष्ठं वर्तते ।

दूराद्भिर्धावमानानपि लघुगमनः पृष्ठतोऽनुद्रुतः सन्
उच्चैः फीट्कारदानश्रवणनिपतितान् सङ्घशः सङ्घशोऽयम् ।
पादाग्रक्रान्तदेहत्रुटनचटचटत्कुर्वदस्थिप्रमथ्यन्
नीषादन्तोरुषान्धः किमपि तनुमतः पिष्टपेषं पिनष्टि ॥57॥

---

1: add स्वगतं $म_2$, $अ_1$, $मु_2$, $मै_2$

**भ्रमरकः** – णाह, एसो णिब्भरोसणिब्भिण्णदेहुप्पाडिपाडलंतमालवेडिअकरालादन्तमुसलो साअरमहणवेलाविलग्गविज्जुम्मण्डलमण्डिअ सिङ्गो-विअ मन्दरो उब्भिज्जन्तगण्डमूलहीरन्दमुहरभमरसण्डजअडिण्डिमघोससूइआअमणो अद्ध त्थुडिआइद्धलोहसिङ्खलाखलखलाअन्तचलणो ईसिचउरिअपिङ्गललोअणभीसणमुहाभोओ इदो मुहं एव्व आअच्छइ दुट्ठवारणो।

[नाथ, एष निर्भररोषनिर्भिन्नदेहोद्धाटितपाटलां तमालवेष्टितकरालदन्तमुसलः सागरमथनवेलाविलग्नविद्रुमदण्डमण्डनमण्डितशृङ्ग इव मन्दरः उद्भिद्यद्गण्डमूलहिण्डमानमुखरभ्रमरषण्डजयडिण्डिमघोषसूचितागमनो अर्धखण्डिताकृष्टलोहशृङ्खलाखलखलायमानचरणः ईषच्चिकुरितपिङ्गललोचनभीषणमुखाभोगः इतोमुखमेवागच्छति दुष्टवारणः।]

**सर्वाः** – (सकम्पं)

महाभाअ, परित्तासु, परित्तासु ।

[महाभाग, परित्रायस्व, परित्रायस्व ।]

**मारुतः** – मा भैष्ट। अहमेनं निवारयामि दुष्टवारणम्।

(इति सत्वरं बद्धपरिकरो निष्क्रान्तः)

**मल्लिका** – (सविषादं)

हत्थि, हत्थि, अहिमुहं धाविओ एव्व महाभाओ।

[हन्त, हन्त, अभिमुखं धावित एव महाभागः ।]

**भ्रमरकः** – (सहर्षं)

हन्त [1]दूरप्पसारिअसुण्डादण्डं सोवाणं कदुअ आरूढमत्थएण णाहेण कण्णमूलघट्टिअ-णिट्ठुरङ्गुट्ठपीडणम्मुक्कफिक्कारं णिवट्टिओ एव्व दुट्ठगओ । जाव अहम्मि पिट्ठदो होमि ।

[हन्त, दूरप्रसारितं शुण्डादण्डं सोपानं कृत्वा आरूढमस्तकेन नाथेन कर्णमूलघट्टितनिष्ठु-राङ्गुष्ठपीडनमुक्तफीट्कारो निवर्तित एव दुष्टगजः । यावदहमपि पृष्टतो भवामि ।]

(इति निष्क्रान्तः)

**सर्वाः** – हुं, णअणपहं अदिक्कन्दा एदे ।

[हुम् । नयनपथमतिक्रान्ता एते ।]

(पुनर्नेपथ्ये)

इह रमयन्तिका ललति सोमसरःसलिले
ष्वहहतदन्तिकं झटिति धावति दन्तिवरः ।

**सर्वाः** – हत्थि, हत्थि, हा हा, सहि रमअंतिए, कहं कमलिणी विअ कुञ्जरहत्थगआसि !

[हन्त, हन्त, हा हा, सखि रमयन्तिके, कथं कमलिनीव कुञ्जरहस्तगतासि !]

(पुनर्नेपथ्ये)

शिव शिव खादकाण्डशतकोटिरिवाद्रितटे
निपतति मस्तकेऽस्य कलकण्ठमृगाधिपतिः ॥58॥

---

1. रोस° म$_1$, के$_2$ [रोष °]

**सर्वाः** – (आकर्ण्य, सविस्मयं[1])

साहु कलअण्ठ साहु । [साधु कलकण्ठ, साधु ।]

(पुनर्नेपथ्ये)

सहि, रमअंतिए, मा मा भीलुआ होहि । दूरं णीदो एव्व कलअण्ठकण्ठीरवेण गअमल्लो[2] ।

[सखि, रमयन्तिके, मा मा भीरुका भव । दूरं नीत एव कलकण्ठकण्ठीरवेण गजमल्लः ।]

**सर्वाः** – (श्रुत्वा)

एदं सारसिआए आसासणं वअणम् ।

[एतत्सारसिकाया आश्वासनं वचनम् ।]

**कालिन्दी** –सहि मल्लिए जीविदसंसआदो मुक्कं रमणंतिअं आसासह्म ।

[सखि, मल्लिके जीवितसंशयान्मुक्तां रमयन्तिकां आश्वासयामः ।]

(इति निष्क्रान्ताः सर्वे)

उद्दण्डं रङ्गनाथः सुतमलभत यं रङ्गदेवी तथाम्बा
त्रैविद्येशो महर्षिनिरवधिमहिमा यद्धिते जागरूकः ।
तस्य श्रीविक्रमाज्ञाबहुमतिरचिते मल्लिकामारुतेऽस्मिन्
तार्तीयीको व्यतीतः प्रकरणतिलके निष्कलङ्कोऽयमङ्कः ।।[3]

*****

1. सहर्षविस्मयं, $मु_2$, $त_2$, $के_1$ 2. दुद्दगओ [दुष्टगजः], $मु_1$

3. इति तृतीयोङ्कः, $मु_1$; omits the whole of the verse.

## ॥ चतुर्थोऽङ्कः ॥

(ततः प्रविशतः हस्तिपकौ)

**एकः** - अले वव्वलअ, हिमाणहे वीसवसुकञ्चकामुआह णाहशम्बलअलाह अणवेक्कददोशे अदिजुउच्छिदे उ अमे। जं चन्द्रशीअलशहावे शत्तूणं वि वस्सले लूवलंचविजिदलदिवल्लहे माकुदे अणुलत्ता ललिअक्केदुअ तस्स गूढमलनम्मि पवट्टइ । पेस्सि बिलदो णिग्गदअ शे एक्के एव्व वशन्तवणुज्जाणं पविशं पेस्किद ति चालपुलिशाअसकिदं गुणिअ ओशधदाणेण कुत्तलाइउम्मादणे गणे तुमं वि णिउत्तह्म ।

(सविस्मयं)

तह णाम उम्मादिदे लोसामलिशपल्लवसे मह बालणे तेण महापुलिशेण उआणदो झत्ति णिग्गदुआ लीलाव्वणआलूढे दूलुलक्कन्ते विअ दुस्टशव्वे दूलदूलं णीदे ।

[अरे वर्वरक, हीमाणहे, विश्वावसु-कन्याकामुकस्य नाथशम्बरकस्य अनेपेक्षितदोषः अतिजुगुप्सित उद्यमः । यच्चन्द्रशीतलस्वभावे शत्रूणामपि वत्सले रूपलक्ष्मीविजितरतिवल्लभे मारुतेऽनुरक्ता मल्लिकेति कृत्वा, तस्य गूढमरणे प्रवर्तते । पश्य, शिबिरान्निर्गत्य स एक एव वसन्तवनोद्यानं प्रविशन् प्रेक्षित इति चारपुरुषाख्यातं श्रुत्वा औषधदानेन कुञ्जरयो-रुन्मादने अहं त्वमपि नियुक्तौ स्वः । (सविस्मयं)

तथा नामोन्मादितः रोषामर्षपरवशः मम वारणस्तेन महापुरुषेण उद्यानाज्झटिति निर्गत्य लीलयैवारूढः गरुडोत्क्रान्त इव दुष्टसर्पः दूरदूरं नीतः ।]

**वर्वरकः** – शीहमुह ! साहु भणदं तुए । णाह शम्बलआह अदिजुउच्छिदे उ अमेत्ति । ही हि ही णवरं[1] सेखु विशल्लीपुलिशे त्ति कथिदे लसीएहिम् । जे कलेदि अहिलासमयजे अजलं-तहिअआसु वहूसु ।

[सिंहमुख, साधु भणितं त्वया । नाथशम्बरकस्य अतिजुगुप्सित उद्यम इति । ही हि ही न परं[2] स खलु पिशाचीपुरुष इति कथितो रसिकैः । यः रोत्यभिलाषमधन्यः अन्यसक्तहृदयासु वधूषु ।]

**सिंहमुखः** – अह सोमसलम्मि कलअंठसविधं धाविदीस्म तुह बालणस्स का अवत्था ।

[अथ सोमसरसि कलकण्ठसविधं धावितस्य तव वारणस्य का अवस्था ?]

**वर्वरकः** –से रवु सलीलक्किलाविलोलं विसुणुलाअ-उत्तं लमअन्तिअं घेत्तुकामे जलमज्झं पविढे ।

[स खलु सलिलक्रीडाविलोलां विषणुरातपुत्रीं रमयन्तिकां ग्रहीतुकामो जलमध्यं प्रविष्टः ।]

**सिंहमुखः** – (सानुतापं)

हहि ! लमअंतिआ वि किं तस्सिं एव्व वदेसे !

[हन्त, रमयन्तिकापि किं तस्मिन्नेव प्रदेशे ?]

---

1. एव सले, मु$_1$ 2. केवलं, मु$_2$, अ$_2$

**वर्वरकः** - (विहस्य)

शीहमुह, जाला तुह बालणे उआणं पस्तिदे ताला मल्लिआ वि तस्सिं एव्व वदेसे चिट्ठइ ।

[सिंहमुख, यदा तव वारणो उद्यानं प्रस्थितः, तदा मल्लिकाऽपि तस्मिन्नेव प्रदेशे तिष्ठति ।]

**सिंहमुखः** - (सोद्वेगं)

[1]हीमाणहे, किं मल्लिआ वि तस्सिं एव्व देसे ? सोस्ति णाहशम्बलअ आहवञ्ञए। जदि उच्छुलदा विअ सिन्धुलेण घेप्पइ मल्लिआ ता सव्वे वि विहले एव्व पलिश्शमे ।

[हीमाणहे, किं मल्लिकाऽपि तस्मिन्नेव देशे ? स्वस्ति नाथशम्बरकस्य प्रज्ञायै । यदि इक्षुलतेव सिन्धुरेण गृहीता मल्लिका, तर्हि सर्वेऽपि विफल एव परिश्रमः।]

**वर्वरकः** - (विहस्य)

सव्वहा विहले एव्व पलिश्शमे ।

---

1. भीमाणहे, किं मल्लिका व तस्मिं एव्व देसे ? सोस्ति णाह सम्बलआह वञ्ञए । जदि उच्छुलदाविअ सित्थलेण घेप्पइ मल्लिआ ता सव्वे वि हले एव्व । लमअंतिअं उद्दिसिअं वसालिदकले अणुमेत्तं तलिए दोग्घट्टे हाकालमुहलेसु लोएसु अवलिल्लादो अवक्कन्दिअ मत्थए कण्ठेण कण्ठीलवेण विअ शो णिवस्तिदे मणिऊडणिअडकाणणं एव धाविदे । [भीमाणहे, किं मल्लिका वा तस्मिन् एव देशे? स्वस्ति नाथशम्बरकस्य प्रज्ञायै । यदि इक्षुलतेव सिन्धुरेण गृहीते, मल्लिका, तर्हि सर्वेऽपि विफल एव । रमयन्तिकामुद्दिश्य प्रसारितकरे धनुर्मात्रतल्पे द्विपे हाहाकारमुखरेषु लोकेष्व-वलीढात् अवस्कन्दितमस्तके कलकण्ठेन कण्ठीरवेण इव सः निवर्तितो मणिकूटनिकटकाननं एव धावितः ।] , मु,

[सर्वथा विफल एव परिश्रमः ।]

**सिंहमुखः** - तदो तदो ? [ततस्ततः ?]

**वर्वरकः** - तदो दूलादेव लमअंतिअं उद्दिसिअ वसालिदकले धणुहमेत्ततलनदे दोग्घस्थे हाहाकालमुलेसु लोएसु अवलीलादो तुलुशिहहलादो अवस्कन्दिअ मस्तए कलअंठेण कण्ठीलवेण विअ णिवस्तिवे मणिऊडणिअकाणणं एव्व धाविदे ।

[ततः दूरादेव रमयन्तिकामुद्दिश्य प्रसारितकरो धनुर्मात्रान्तरितो द्विपो हाहाकारमुखेषु लोकेष्ववलीढात्तरुशिखरादवस्कन्द्य कलकण्ठेन कण्ठीरवेणैव निर्वर्तितो मणिकूटनिकटकाननमेव धावितः ।]

**सिंहमुखः** - हीमाणहे कुञ्जला विअ अवहिदा एव्व ।

(विहस्य)

हीहि भाइदुं गहीद ह्य। अध कथेहि मल्लिआ कहिं चिट्ठइत्ति।

[हीमाणहे, कुञ्जरा अप्यवधृतावेव । हीहि भीषयितुं गतौ स्वः । अथ कथय मल्लिका कुत्र तिष्ठतीति ।]

**वर्वरकः** - सा खु सोमशलम्मि मूल्लिअं लमअंतिअं आसासन्ती ठाइ ।

[सा खलु सोमसरसि मूर्च्छितां रमयन्तिकामाश्वासयन्ती तिष्ठति ।]

(नेपथ्ये)

इदो इदो । गअमल्लगप्पमअणो णाहो ।
[इतः इतः । गजमल्लगर्वमथनो नाथः ।]

(उभौ आकर्णयतः)

**सिंहमुखः** – एशे भमलअ दंसिअ मग्गे आगए एव्व वसन्त वणशमीवे णअणाहिलामो मालुदे । ता गच्छाम आआशवाणीपओअपण्डिदस्स णादिदूल-वस्थिणस्म अय्यकलविङ्गअस्स णाहपिअ-सिस्सस्स एदं वुत्तन्दं कथम्म ।

[एष भ्रमरकदर्शितमार्गः आगत एव वसन्त-वनसमीपे नयनाभिरामो मारुतः । तस्माद्गच्छावः आकाशवाणी योगपण्डितस्य नातिदूरवर्तिनः आर्यकलविङ्गकस्य नाथप्रियशिष्यस्यैतं वृत्तान्तं कथयावः । ]

(इति निष्क्रान्तौ)

॥ प्रवेशकः ॥

(ततः प्रविशतः मारुतो भ्रमरकश्च)

**मारुतः** – भ्रमरक, क्व नाम गच्छेत् कुञ्जर-कोलाहलोद्वेजिता मल्लिका ? अपि वसन्तोद्याने पुनर्दृश्यत एव?

**भ्रमरकः** – मण्णे रमअंतिअं दट्ठुं सोमसरं गएत्ति ।

[मन्ये रमयन्तिकां द्रष्टुं सोमसरःगतेति ।]

**मारुतः** – युज्यत एतत् । तदादेशय सोमसरः सरणीम् ।

**भ्रमरकः** – इदो इदो । [इतः इतः ।]

(उभौ परिक्रामतः)

**मारुतः** – (सानुक्रोशं)

अभिमुखपतयालुक्रूरमातङ्गमल्ल-
प्रतिभयकलबृंहोद्वेपितायाः[1] स्मरामि ।
स्थितमतिदयनीयं दृप्तशार्दूलकण्ठ-
स्वनचकितकुरङ्गीकातरप्रेक्षितायाः ॥1॥

आश्चर्यं –

सत्यं सहस्रगुणमुत्तप[2]नादभूमा
कामानलो दहति गात्रमिदं तथापि ।
तस्या घनस्तनभरार्पणलोभनीया-
दद्यापि नो गलति सा पुलकालिरङ्गात्[3] ॥2॥

**भ्रमरकः** – णं णिम्मदीकिओ[4] दूरणिरत्थो खु सो णाहेण वेअंडो पअंडो ।
[ननु निर्मदीकृतो दूरनिरुद्धः खलु सः नाथेन प्रचण्डो वेतण्डः ।]

**मारुतः** – भ्रमरक, अपि सत्यं रमयन्तिकोपकण्ठं उपसर्पन्नपरः करी कलकण्ठेन निवर्तित इति ।

**भ्रमरकः**–णाह, णं भणामि णाहस्स पिट्ठदो अणुधावंतेण मए दिट्ठो सोमसरः कूडादो[5] मणिऊडपव्वअ-मूलकाणणमज्झं पविसन्दो साडोवधावन्त-सिन्धुरकन्धरारूढो णाहकलअंठोत्ति ।

---

1.बृंहोद्वेपिताङ्ग्याः , मु₁, त₂ 2.उत्तपमानं, मु₂ 3. अंसात् , मु₂, त₂
4. णद्धिकओ, त₂ 5. कूलाओ, मु₂

[नाथ, ननु भणामि नाथस्य पृष्टतोऽनुधावता मया दृष्टः सोमसरःकूलान्मणिकूटपर्वतमूल-काननमध्यं प्रविशन् साटोपधावत्सिन्धुर-कन्धरारूढो नाथकलकण्ठ इति ।]

**मारुतः** – (सवितर्कं)

भ्रमरक,

हृष्यामि निष्ठुरकृतान्तमुखप्रपन्ना
सा विष्णुराततनया प्रतिपालितेति ।
दूये च दुर्मदमतङ्गजनीयमान-
माकर्ण्य काननगतं कलकण्ठमेकम् ॥3॥

**भ्रमरकः** – जाणन्तो वि पिअमित्तस्स भुअसोण्डीरं कहं णाम खिज्जइ णाहो ।

[जानन्नपि प्रियमित्रस्य भुजशौण्डीर्यं कथं नाम खिद्यते नाथः ?]

**मारुतः** – सत्यमात्थ ।

अपि कुञ्जरकोट्यः प्रभिन्नाः प्रभवन्ति क्षणमुद्भटं विसोढुम् ।
अवि[1]कुण्ठपराक्रमस्य युद्धे कलकण्ठस्य कथं नु चण्डिमानम् ॥4॥

तथापि

प्रत्यायते[2] स यावत् तावत् खिन्दान एवास्मि ।
आशङ्कते ह्यपायानपदेऽपि स्नेहकातरं चेतः ॥ 5 ॥

---

1. अपि, मु,  2. अद्य, मु,

(ततः प्रविशति पथिकवेषधारी ससंभ्रमः
शम्बरकशिष्यः कलविङ्कः ।)

**कलविङ्कः** - (मारुतं विलोक्य)

स एष मारुतो गूढं यस्मै द्रुह्यत्यमेयधीः ।
मल्लिकारल्लकाविद्धहृदयो मद्गुरुः स्वयम् ॥ 6 ॥

सत्यमुक्तं सिंहमुखवर्वरकाभ्यां वसन्तो-
द्यानान्निर्गच्छन्दृष्ट इति ।

**मारुतः** - (दृष्ट्वा)

इतस्ततः कण्ठकविक्षताङ्गो रजश्छटाकीर्णकरालजङ्घः ।
परिस्खलन्नध्व[1]परिश्रमेण प्रतिष्ठते कश्चन पान्थ एषः ॥ 7॥

**कलविङ्कः** - (सविषादं)

हन्त, निष्फलोऽस्मद्गुरोः वञ्चनोन्मादप्रयासः ।
भवतु, उपायान्तरं प्रयोक्ष्ये ।

(ससंभ्रममुपसर्पति)

**भ्रमरकः** - णाह, ब्रह्मसुत्तलंच्छिअवच्छो दुआदी विअ
लक्खिज्जइ ।

[नाथ, ब्रह्मसूत्रलाञ्छितवक्षः द्विजातिरिव लक्ष्यते ।]

**मारुतः** - द्विजन्मन् ! कुतस्त्वमध्वखिन्नः[2] सम्भ्रमापन्न
इव लक्ष्यसे ?

**कलविङ्कः** - (आवेगं नाटयन्)

---

1. अद्य, $मु_1$ 2. संभ्रान्त, $मु_2$

क्षणमात्मानमवस्थाप्य सर्वमाख्यास्यामि ।अद्यापि वेपते मे हृदयम् । गजमयीरिव दिशः पश्यामि ।

**मारुतः** – (स्वगतं)

हन्त, अयमपि मतङ्गजादुद्वेजितस्तपस्वी ।

(प्रकाशं)

भीरो, विस्रब्धं ब्रूहि । क्वात्र[1] कुञ्जरः ?

**कलविङ्कः** – (निःश्वस्य)

श्रूयताम् ।

आन्ध्रेष्वहं जनपदे हरदत्तनामा
गोदावरीपरिसरस्थितिमान् द्विजोऽस्मि ।
संसारपङ्कचकितः शिवमौलिमाल्ये
मन्दाकिनीपयसि गन्तुमनाः प्रयामि ॥ 8॥

**मारुतः** – दिष्ट्या तीर्थयात्रापान्थोऽसि ।

**कलविङ्कः** – अध्वश्रमेण साम्प्रतमागच्छन् सोमसरसि सिष्णासुर्मणिकूटपरिसरवने मदकरिणाऽनु-द्रुतोऽस्मि केनापि ।

**मारुतः**– भ्रमरक, मन्ये कलकण्ठाधिष्ठितस्सैव वेतण्डः । हन्त महति[2] सङ्कटे पतितोऽसि ! कथं तद्विमुक्तोऽसि ?

**कलविङ्कः** – तर्हि, [3]

---

1. क्वाद्य, $मु_2$ 2. अति, $त_{1-2}$ 3. om. अध्वश्रमेण to तर्हि, $मु_1$, $म_1$

तत्कन्धरस्थितिरनङ्कुश एव कश्चि-
दाधोरणः कनकचम्पकगौरगात्रः ।
पादाग्रघट्टनविमोटितकर्णजाहः
कारुण्यवारिधिरचेष्टत तन्निरोद्धुम् ॥ 9॥

**मारुतः** – (जनान्तिकं)
गतः संशयः। ननु निरङ्कुशमपि मतङ्गजमनङ्कुशो नियमयत्येव कलकण्ठः ।
(प्रकाशं)
ततस्ततः ?

**कलविङ्कः** – ( बाष्पं नाटयन् )
मम नातः परं प्रसर्पति वाणी ।

**मारुतः** – (साशङ्कं)
कथय किं ततो वृत्तम् ?

**कलविङ्कः** –सोऽयं शैलेन्द्रसारो-
प्यहह बलवता क्रोधनिर्धूत मूर्ध्ना
प्रक्षिप्तोऽवाक् पृथिव्यां ।[1]

**मारुतः** – हा सखे कलकण्ठ ! कथं पतितोऽसि ?

**कलविङ्कः** – प्रशिथिलवसनः सम्भ्रमादुत्पतिष्णुः ।

**मारुतः** – (सप्रत्याशं)
ततस्ततः ?

---

1. तदुर्व्या, मु,

**कलविङ्कः** –

आक्रान्तो दुर्मदेन द्रुतमिभपतिना हा सखे मारुतेति
क्रन्दन् व्यावेष्टमानो गतघृणममुना दन्तघातैरघानि ॥10 ॥

**मारुतः** – (सबाष्पाक्रन्दं)

हा हा बन्धुजनेन्दो ! हा हा परिपन्थिशैलशतकोटे ! हा हा मारुतजीवित ! हा हा कलकण्ठ ! किमिदमापतितम् !

(इति मूर्च्छन् पतति)

**भ्रमरकः** – (सबाष्परुदितं, मारुतं धारयन्) हा णाह कलअण्ठ ! कहं णु तं तारिस परक्कमोपहसिस परक्कमोपहसिअमहेन्दस्स तुह करिकीडादो विणिवादो.?

[हा नाथ, कलकण्ठ ! कथन्नु तत्तादृशपराक्रमोपहसितमृगेन्द्रस्य तव करिकीटाद्विनिपातः !]

**कलविङ्कः** – (सहर्षं, स्वगतं)

फलितप्रायोऽस्मन्नीतिद्रुमः ।

(प्रकाशं)

हा कष्ठम् अप्रियावेदकोऽस्मि । भद्र ! कथय, कोऽयमीदृशव्यसनानुचितो महाभागः, कश्च पुनरेतत्प्रेमास्पदं मददन्तिकरकेलिकन्दुकः[1] स महापुरुषः?

---

1. केलिकरः, मु₁

**भ्रमरकः** – एसो [1]महाप्पहाववसीकिअ सअलभूमण्डल-स्स अमच्चब्रह्मदत्तस्स कुमारो मारुओ। सो अ एदस्स पिअमित्तं कलअंठो णाम।

[एष महाप्रभाववशीकृतसकलभूमण्डलस्य अमात्यब्रह्मदत्तस्य कुमारो मारुतः। स चैतस्य प्रियमित्रं कलकण्ठो नाम।]

(कलविङ्कः मिथ्याविषादं नाटयति)

**मारुतः** – (चक्षुरुन्मील्य)

सखे, कलकण्ठ! किं एकपदे एव मां परित्यजसि ?

(निःश्वस्य)

हा हन्त निर्मलसुधाकरबिम्बवक्त्रं
आजानुलम्बिभुजदण्डमवद्यशून्यम्।
गात्रं कथन्नु तव वज्रकठोरधारं
वेतण्डदन्तमुसलक्षतिपात्रमासीत्॥11॥

**कलविङ्कः** – दुःसहानि खलु सुहृद्विपत्तिव्यसनानि।

**मारुतः** –

नो लिप्ता यशसा दिशो न गुरवः शुश्रूषया तोषिता
न प्राप्तश्च ऋणत्रयापहतये पुण्यो गृहस्थाश्रमः।
नो वा पूरितमर्थिनामभिमतं न स्त्रीकथाऽपि श्रुता
हा हा निष्करुणेन दग्धविधिना नीतोऽस्यकाण्डे सखे॥2॥

---

1. मइ [मति], $मु_2$, $म_2$, $त_2$

**भ्रमरकः** – हन्त, परूढमत्तो एव्व पारिजातपोदओ खुडिओ अमुणिअप अमुणिअपडणेण सुक्कणिग्घादेण ।

[हन्त, प्ररूढमात्र एव पारिजातपोतकः खण्डितः अज्ञातपतनेन शुष्कनिर्घातेन ।]

**मारुतः** – (सगद्गदं)

किमालम्बं धैर्यं भवतु ननु शून्या सुजनता
निराधारा नीतिः प्रियवचनमेकान्तविरतम् ।
विनष्टो विस्रम्भः शमितमखिलं बान्धवतपः
कथामात्रा सत्ता मम हि कलकण्ठ त्वयि गते ॥13॥

तदलं[1] निरर्थकैः परिदेवितैः कियद्विलम्बब्यते । यावन्मणिकूटमुपेत्य भृगुपातेन प्रियसुहृदः पन्थानमनुगच्छामि । भ्रमरक, याहि नीयता-मस्मन्नगरमेव स्कन्धावारः ।

**भ्रमरकः** – (सविषादं)

किं एदं अण्णं आरद्धम् ?

(चरणयोर्निपत्य)

णाह, परित्ताअसु परित्ताअसु। सराअअं सबन्धु-वग्गं सराअउत्तमण्डलं सगअतुरअपाद्दअं सअलं वि कुन्तललोअं स्स तुमं एक्को जीविअंसि ।

[(सविषादं)किमेतदन्यदारब्धम्?(चरणयोर्निपत्य) नाथ, परित्रायस्व, परित्रायस्व । सराजकं,

---

1. तदद्य, $त_2$, $मु_2$; तदन्य $अ_1$

सबन्धुवर्गं सराजपुत्रमण्डलं सगजतुरगपदातिकं सकलमपि कुन्तललोकं, यस्य त्वमेको जीवितमसि ।]

**मारुतः** – (शून्यवदन एव विहस्य)

यो दुःखितेव दुःखी सुखितेन सुखी मयानुपादम्[1] ।
तत्र यशः शेषतनौ सख्यौ जीवन्न[2] जिहेमि ॥14॥

**कलविङ्कः** – (सानन्दं, स्वगतं)

नियतमुपरममेत्येवैषः[3] । अहो मे आकाश-वाणीप्रयोग कोविदस्य सर्वंकषो मतिप्रकर्षः ।

तथाहि –

भ्रूक्षेपविभ्रमनियोजितसैन्यचक्र-
नासीरवीरशकलीकृतशात्रवस्य ।
एतस्य विक्रमनिधेर्विनिपातनेऽस्मि-
न्सेयं मम प्रभवति स्वयमूर्जिता धीः ॥15॥

तदमुना उदन्तेन यावदस्मद्गुरुमानन्दयामि ।

(विमृश्य)

अथवा अनेनैव पथिकवेषेण अमुमेव मारुतोपरमं सोमसरस्तीरवासिन्या मल्लिकाया निवेदयामि । येन, अस्मान्निवृत्तानुरागा स्वयमेव मद्गुरूद्वाहमनु मंस्यते । विश्वावसुना तु कात्यायनीवचनैक-प्रमाणेन प्रतिपन्नमेवैतत् ।

---

1. मया न वरं म$_{1-2}$, के$_2$ ; मयानवरतम्, त$_2$ । 2.जीवन् कथं, अ$_1$, के$_2$ न
3. नियतमुपसरस्यत्येवैषः ।, मु$_2$, मै$_3$; नियतमुपरममेत्येव एषः, मु$_1$

**भ्रमरकः** (कलविङ्कं प्रति)

तुह्मे णिवारेह अह्माणं णाहस्स अदिदारुणं आरम्भम्।

[यूयं निवारयत, अस्माकं नाथस्य अतिदारुणमारम्भम् ।]

**कलविङ्कः** - भद्र, एवमनुरक्तस्यास्य महापुरुषस्य दुर्निवारोयमध्यवसायः। न क्षमे चैतादृशानि द्रष्टुम् । तदहं मार्गादनशनोह्यसोढः क्षणविलम्बमपि[1] यास्यामि ।

(इति निष्क्रान्तः)

**भ्रमरकः**- (स्वगतं)

अदि णिसंसो विअ एसो पडिभाइ ।

(प्रकाशं)

णाह, तह णाम अणुरत्तहिअआ मल्लिआ वि कहं उवेक्खिज्जइ ।

[(स्वगतं) अतिनृशंस इवैष प्रतिभति। (प्रकाशं) नाथ, तथा नामानुरक्तहृदया मल्लिकाऽपि कथमुपेक्ष्यते ।]

**मारुतः** - मुग्ध !

त्यजतासूनपि येन स्नेहार्द्रेणाहमाहूतः ।
तेन वियुक्तस्याद्य[2] मल्लिकया जीवितेन वा किं मे ।।16।।

---

1. तदहं आगङ्गदर्शनमसोढक्षणमार्गविलम्बो, $मु_2$, $म_{1-2}$
2. वियोगस्यास्य, $म_1$; वियोगस्याद्य, $मु_2$, $त_2$, $के_2$

(ततः प्रविशति कलकण्ठः)

**कलकण्ठः** – (सानुरागं)

स्नान्त्या [1]च्युताञ्जनविलोलविलोचनश्री-
विष्वग्विकीर्णकमलोत्पलमम्बुमध्ये ।
तस्याः पयः कणकरम्बितमुग्धगण्ड-
मद्यापि मुञ्चति न मानसमाननं तत् ॥17॥

यावदहं दूरनिरस्तहस्तिनं प्रियसुहृदं वसन्तवनसविधेऽन्विष्यामि ।

(परिक्रामन्, विलोक्य, सविषादशङ्कं)

एष बाष्पायमाणनयनविनिवेदितशोकभारः चरणनिपतितेन भ्रमरकेण सप्रार्थनं किमपि निवार्यते ।

(उपसर्पति)

**भ्रमरकः** – णाह जइ एव्वं पुडमं एव्व भिअम्मि पडिस्सदि सअलो वि खन्दावारो ।

नाथ, यद्येवं प्रथममेव भृगौ पतिष्यति सकलोऽपि स्कन्धावारः ।

**कलकण्ठः** – (सभयविषादं)[2]

किं प्रथममेव भृगौ पतिष्यति स्कन्धावार इति ?

**मारुतः** – (अशृण्वन्नेव, ऊर्ध्वमवलोक्य)

---

1. श्रान्त्या च्युतानन °, मु, 2. सविषादं

सखे, कथं मामवमत्य गच्छन्
स्वच्छन्दतो द्यान्न[1] विलज्जितोऽसि ।

**कलकण्ठः** – हन्त, जीवन्तमेव मामन्यथा संभावयति प्रियवयस्यः ।

**मारुतः** –

क्षणं विलम्बस्व गजेन्द्रगामिन्
जवादहं यावदनुव्रजामि ।।18।।

**कलकण्ठः**– शान्तं पापम् । शान्तं पापम् । प्रतिहत-ममङ्गलम् । प्रतिहतममङ्गलम् ।

(त्वरितमुपसृत्य)

वयस्य, किमिदमस्थान एव सकलमहीमण्डल मण्डनमात्मानममङ्गलेन ननु वचसा योजयसि ।

**मारुतः** – हन्त कलकण्ठस्य स्वरोऽयम् ।

**भ्रमरकः** – (विलोक्य)

णाह, दिट्ठिआ वड्ढामो पच्चाठाओ एव्व एसो णाहकलअंठो ।

[नाथ ! दिष्ट्या वर्धामहे प्रत्यागत एव एष नाथ कलकण्ठः ।]

**मारुतः** – (सहर्षगद्गदं)

एह्येहि सखे कलकण्ठ ! देहि कण्ठग्रहं मम पुनर्न प्रभवतो बाष्पायमाणे द्रष्टुं विलोचने ।

---

1. स्वच्छन्दतोद्यमान् , मु,

**कलकण्ठः** – (सस्नेहमालिङ्ग्य)

वयस्य, किमेतद्वर्तते ?

**भ्रमरकः** – णाह, गोलणईतीरवासोत्ति कोवि पहिओ आगदुअ तह कहिदवन्दो कुञ्जरउत्तंत्तम् । जेण णाहो वि भिउपडणम्मि सज्जओ ।

[नाथ, गोदावरीतीरवास इति कोपि पथिकः आगत्य तथा कथितवान् कुञ्जरवृत्तान्तं, येन नाथोपि भृगुपतने सज्जितः ।]

**कलकण्ठः** – (विमृश्य)

मन्ये, कुहनविदा शम्बरकान्तेवासिना कलविङ्केन विप्रलब्धः प्रियवयस्यः । द्रुह्यति चास्मभ्यं मल्लिकार्थी शम्बरकपशुः ।

(नेपथ्ये)

हा सअललोअलोअणणिम्माणफलमहाभाअ, कहं तुइ अणुरत्तं मं परिच्चइअ सग्गविलासिणी-लोलुवोसि ! ता जाव ओहसिअ कुसुमाउह-गव्वं तुमं अच्छारओ अप्पवसं ण णअंति, दाव झति आगदुअ अहं णिवारेमि ।

[(नेपथ्ये) हा सकललोकलोचननिर्माणफल महाभाग, कथं त्वय्यनुरक्तं मां परित्यज्य स्वर्गविलासिनीलोलुपोसि ! तस्माद्यावद-पहसितकुसुमायुधगर्वं त्वां अप्सरसः आत्मवशं न नयन्ति, तावज्झटित्यागत्य अहं निववारयामि ।]

(सर्वे आकर्णयन्ति)

**मारुतः** - (साकूतं)

नादः स एष मृगशावविलोचनायाः
चेतो विकर्षति विलोलयते धृतिं मे ।
व्याधेषु विद्धनिजवल्लभतीव्रशोक-
विप्लुष्टबालकुररीरवमुग्धतारः ॥19॥

**कलकण्ठः** -

मन्ये मल्लिकामप्यमूमुहत् मुसल्यः कलविङ्कः। यावदेनां त्वरितमभ्यवपद्यामहे ।

(सजवमुपसर्पति)

**भ्रमरकः** - णाह एसो तत्तहोदीए सीमन्तपरिच्चुदो तिप्पइ सिहामणि ।

[नाथ, एष तत्रभवत्याः सीमन्तपरिच्युतो दीप्यते शिखामणिः ।]

**मारुतः**- मन्ये मतङ्गजभयव्याकुलाया गमन-संभ्रमच्युतेनानेन भवितव्यम् ।

(उद्धृत्य, सस्नेहं)

नन्वद्धुतो नताङ्ग्याः चिकुरे जलदे यथा तडित्पुञ्जः ।
सम्प्रति शोच्योऽसि मणे तस्याश्चूडापदात्परिभ्रष्टः ॥ 20॥

(पुनर्नेपथ्ये)

कालिन्दि, धारेहि, धारेहि, मुज्झन्ती णिपडइ पिअसही मल्लिआ ।

[कालिन्दि, धारय, धारय, मुह्यन्ती निपतति प्रियसखी मल्लिका ।]

(सर्वे आकर्ण्य त्वरितमुपसर्पन्ति)

(ततः प्रविशति नवमालिकाकालिन्दीभ्यां धार्यमाणा मूर्च्छानिमीलिताक्षी मल्लिका, संभ्रान्ताश्च रमयन्तिकामधुकरिकासारसिकाः ।)

**रमयन्तिका** – (सविषादं)

हद्धि, णिप्फन्दा अज्ज वि पिअसही मल्लिआ ।

[(सविषादं) हन्त, निष्पन्दा अद्यापि प्रियसखी मल्लिका ।]

**नवमालिका** – (सबाष्पं)

कस्स किदे रुदिस्सामो किं महाभाअस्स उद मल्लिआए !

[(सबाष्पं) कस्य कृते रोदिष्यामो किं महाभागस्य, उत मल्लिकायाः !]

**सर्वाः** – हा मल्लिए ! तुमं वि किं महाभाअं अणुगच्छसि ?

[(सबाष्पं) हा मल्लिके ! त्वमपि किं महाभाग मनुगच्छसि ?]

**सारसिका** – कालिन्दि ! कहिं णु पव्भट्टो मुच्छाहरो सीमन्तमणी ![1]

---

1.मु$_2$ om. the sentence.

[कालिन्दि, कथन्नु प्रभ्रष्टः मूर्च्छाहरो सीमन्तमणिः !]

**नवमालिका** –हा मल्लिआहिअअवल्लह, महाभाअ मारुअ ! धारेहि तुह किदे मुच्छागअं णम् ।

[हा मल्लिकाहृदयवल्लभ ! महाभागमारुत ! धारय तव कृते मूर्च्छितामेनाम् ।]

**मारुतः** – (ससंभ्रममुपसृत्य)

नवमालिके अयमहं धारयामि ।

**सर्वाः** – (विलोक्य, सानन्दं)

पिअं णो, पिअं णो । अक्खदशरीरो पच्चागदो महाभाओ ।

[प्रियं नः, प्रियं नः । अक्षतशरीरः प्रत्यगतो महाभागः ।]

**नवमालिका** – (सहर्षगद्गदं)

महाभाअ ! हरिषपारवस्सेण[1] पज्जाउला ण किं वि सक्कुणोमि भणिदुम् । धारेहि जीविदसंसअं पत्तं पिअसहीं मल्लिअम् ।

[महाभाग हर्षपारवश्येन पर्याकुला न किमपि शक्नोमि भणितुम् । धारय जीवितसंशयं प्राप्तां प्रियसखीं मल्लिकाम् ।]

(मारुतः सविषादानुरागं धारयति)

---

1. ° परवसेण, मु$_2$

**रमयन्तिका** – (अपवार्य)

महुअरिए, सो एसो पच्चक्खवंमहो महाभाओ मारुओ । जो मह जीविदप्पदाणमहोवआरोणं तस्स पिअसहो । सरिसो क्खु मल्लिआए एदस्सिं पणअबन्धो । दिट्ठिआ असच्चाणि तस्स पहिअहदअस्स वअणाणि ।

[मधुकरिके स एष प्रत्यक्षमन्मथो महाभाग-मारुतः, यो मम जीवितप्रदानमहोपकारिण-स्तस्य प्रिय सखः । सदृशः खलु मल्लिकायाः एतस्मिन् प्रणयबन्धः । दिष्ठ्या असत्यानि तस्य पथिकहतकस्य वचनानि ।]

**मधुकरिका** – सहि रमअंतिए सो[1] किल दुट्ठहिअओ सविआरिदं तुमं पुणो पुणो पेक्खिदवन्दो ।

[सखि रमयन्तिके, स किल दुष्टहृदयो सविकारं त्वां पुनः पुनः प्रेक्षितवान् ।]

**रमयन्तिका** – चिट्ठदु तस्स हदासस्स पसङ्गो ।

[तिष्ठतु तस्स हताशस्य प्रसङ्गः ।]

**कालिन्दी** – सहि, पउज्जस्स, पउज्जस्स । कप्पन्ददीहाउसं पेच्छ महाभाअम् ।

[सखि, प्रबुध्यस्व, प्रबुध्यस्व । कल्पान्तदीर्घायुष्यं पश्य महाभागम् ।]

(मल्लिका प्रत्यागच्छति)

---

1. एसो. मु$_2$

**मारुतः** – (सानन्दं)

नवमालिके मा मा रुदिहि । प्रबुध्यते तव प्रिय-सखी ।

कृष्णस्निग्धकनीनिके विकसतः कर्णान्तदीर्घे दृशा-
वुत्कम्पो हृदयस्य वेपितकुचाभोगःशनैः शाम्यति ।
धत्ते शीतरुचो विधुन्तुदमुखान्मुक्तस्य[1] लक्ष्मीमिदं
मुग्धाङ्ग्या विगलद्विमोहतिमिरं वक्त्रं प्रसीदत्क्रमात् ॥21॥

**मल्लिका** – (स्पर्शसुखमभिनीय)

सहिओ, किं अमुअप्पदहे पाडिअह्मि[2]? अहवा अमडा गदुअ तेण महाभाएण सग्गे सङ्गअह्मि ।

[सख्यः, किं अमृतहृदे पातिताऽस्मि ? अथवा अमृता गत्वा तेन महाभागेन स्वर्गे सङ्गताऽस्मि ?]

**नवमालिका :** – सहि मल्लिए ! णहि णहि सग्गम्मि । एत्थ सोमसरःकूल एव्व लच्छीविलासप्पासादे महाभाअस्स वच्छट्ठले पाडिआसि ।

[सखि मल्लिके ! न हि न हि स्वर्गे । अत्र सोमसरः कूल एव लक्ष्मीविलासप्रासादे महाभागस्य वक्षःस्थले पातिताऽसि ।]

**मल्लिका** – (सहर्षं विलोक्य)

महाभाअ ! दिट्ठिआ तुमं पुणोवि पेच्छामि । अवि सच्चं जीवसि ?

---

1. मुखे मुक्तस्य, $म_1$; मुखोन्मुक्तस्य, $मु_2$, $त_2$ 2. पडिअह्मि [पतितोऽस्मि], $मु_1$

[महाभाग दिष्ट्या त्वां पुनरपि पश्यामि । अपि सत्यं जीवसि ?]

**मारुतः** – (अपवार्य)

सम्प्रति जीवाम्येव त्वयि नामैवं प्रसन्नायाम् ।
नोचेदनङ्गवह्निज्वालादग्धस्य कात्र जीवकथा ॥22॥

(कलकण्ठः उपसर्पति)

**रमयन्तिका** – (सहर्षं)

महाअरिए ! दिट्ठिआ पत्तो कलअण्ठो वि ।

[मधुकरिके! दिष्ट्या प्राप्तः कलकण्ठोऽपि ।]

**मधुकरिका** – दिट्ठिआ एदस्स अमङ्गलाइ ण कहिआइ तेण णिसंसेण । अण्णहा, तुएवि मल्लिआए विअ एदं मुच्छावसणं होज्ज ।

[दिष्ट्या एतस्यामङ्गलानि न कथितानि तेन नृशंसेन । अन्यथा, तवापि मल्लिकाया इव एतन्मूर्च्छाव्यसनं भवेत् । ]

**कलकण्ठः** –अपि भवत्योऽपि तेन पथिकवेषधारिणा शम्बरकान्तेवासिना वञ्चिताः स्थः ?

**सर्वाः** – किमहो ! संबरअसिस्सो[1] हदासो ! कहिअं तेण गोदावई[2] तीरब्रह्मणो वाराणसीपहिओ अहं त्ति ।

[किमहो शम्बरकशिष्यः हताशः ! कथितं च तेन गोदावरीतीरब्रह्मणो वाराणसीपथिकोऽहमिति ।]

---

1. add स, मु₂ 2. गोदाणई [गोदानदी] ,मु₁

**सारसिका** – (जनान्तिकं)

कालिन्दि, णं भणिदं मए एदस्य वि कहभघग्घरो सरो आआसवाणिं अणुहरइत्ति ।

[कालिन्दि ! ननु भणितं मया एतस्यापि करभघर्घरः स्वरः आकाशवाणीमनुहरतीति ।]

**मारुतः** – (स्वगतं)

उपकृतमपकर्त्राऽपि तेन कलविङ्केन ।

श्रुत्वा मिथ्यामद्विपत्तिग्जिहासो –
त्यक्त्वाशङ्कं जीवितं कातराक्ष्याः ।
मुक्तव्याजं प्रेमसर्वस्वमस्या
विस्रम्भाणां स्थानमध्यक्षितं यत् ॥ 23॥

(नेपथ्ये)

भोभो ! भुजस्तम्भसंस्तम्भितप्रतिभटकुम्भी-घटाः सेनाभटाः! अन्वेषयन्तु मणिकूटकटकेषु वसन्तवनोपकण्ठेषु सोमसरः कूलोपशल्येषु स्वामिनं परिपन्थिगजकेसरिणं कुमारमारुतं समरार्णवमन्दरचण्डदोर्दण्डं कलकण्ठं च । अजानत्स्वेव[1] सोमसरस्तीरे भ्रमरकमात्र-परिजनौ सङ्गतौ किल तत्कालप्रभिन्न-मदरोषामर्षदुरुपसर्पाभ्यां कुञ्जराभ्याम् ।

(सर्वे आकर्णयन्ति)

**कालिन्दी** – (विलोक्य)

1. अजानकावेव, मु$_1$

अम्महे एसो पअलंतकुलाअलसहस्ससारिच्छ-भीसणगअघडाणिरुद्धपुरोभाओ वग्गन्ततुरअखुर-कुद्दालोद्दलिअ[1] धरित्तितलचलिअधूलिधूसरिअ-दिसामुहो एत्तोमहो एव्व महत्तो सकलणिवहो।

[अहो एष प्रचलत्कुलाचलसहस्रसादृश्य-भीषणगजघटानिरुद्धपुरोभागः वल्गत्तुरग-खुरकुद्दालोद्दलित[2] धरीत्रीतलचलितधूसरित-दिशामुखः इतो मुख आगत एव महान् सकलनिवहः।]

**मारुतः**- भ्रमरक, गच्छ। निवार्यतां, मा मा संभ्रमः कार्य इति।

**भ्रमरकः** - जं णाहो आणवेदि।

[यन्नाथ आज्ञापयति।]

(इति निष्क्रान्तः)

**नवमालिका** - अब्बो[3] भमरअवअणोदिअणाहवअ-णवेलाणिरुद्धप्पसरो तहीं चिट्ठिओ सेणासाअरो[4]।

[अब्बो, भ्रमरकवदनोदिताज्ञावचनवेला-निरुद्धप्रसरः तत्रैव स्थितो सेनासागरः।]

**मल्लिका** - (जनान्तिकं)

अम्महे, एत्तिअस्स सिण्णाचक्कस्स णाहो वि मह किदेएक्को एव्व ठिओ सअललोअमण्डणभूदो भअंअरस्स कुञ्जरस्स अभिमुहं धाविओ अ।

---

1. ° पुटतालु, मु$_1$ 2. कुट्टालोद्दलित 3. अह सो [अथ सः], मु$_1$
4. बलसाअरो, त$_2$, मु$_2$; [बलसागरः]

[अहो एतस्य सैन्यचक्रस्य नाथोऽपि मम कृते एक एव स्थितो महाभागस्सकललोकमण्डनभूतः भयङ्करस्य कुञ्जरस्याभिमुखं धावितश्च।]

**नवमालिका** – सहि, एव्वं ठिए वि तुए णं सुट्ठु अणुट्टिज्जइ। जं अप्पणेव्व अप्पणएव्व अप्पाणं ण समप्पेइ।

[सखि, एवं स्थितेऽपि त्वया न सुष्ठु अनुष्ठीयते। यत् स्वयमेवात्मानं न समर्प्यते।]

**मल्लिका** – (निःश्वस्य)

सहि, किं करेमि ? तादवसवट्टिणि। तादेण पडिण्णादं किल राअसण्णिहह्मि – "मल्लिआए वरणिण्णए णाहं, पमाणं अवि दु भअवई कच्चाइणी एव्वेत्ति।"

[सखि, किं करोमि ? तातवशवर्तिनी। तातेन प्रतिज्ञातं किल राजसन्निधौ – "मल्लिकाया वरनिर्णये नाहं प्रमाणं, अपि तु भगवती कात्यायन्येवेति"।]

(प्रविश्य, प्रतिहारी कनकलता)

**कनकलता** – णोमालिए ! दुण्णहसोअदुमिअहिअआ भट्टिणी आणवेदि, भट्टिदारिआ झत्ति घरं आणेदव्वेत्ति। पडिपालइ वसन्तवणवेरन्ते सअलपरिअणपरिउदो कण्णीरहो।

[नवमालिके, दुस्सहशोकदूनितहृदया भट्टिन्याज्ञापयति, भतृदारिका झटिति गृहमानेतव्येति।

प्रतिपालयतिवसन्तवनपर्यन्ते सकलपरिजन-परिवृतःकर्णीरथः ।]

**नवमालिका** – (साशङ्कं)

कणअलए, कीस दुस्सहसोहदुम्मिआ भट्टिणी ?

[कनकलते, कस्मात् दुस्सहशोकदूनिता भट्टिनी?]

**कनकलता** – (सविषादं)

णं भअवईए गोरीए आदिट्ठो अमच्चो भट्टिदारिआए सम्बरओ वरोत्ति ।

[ननु भगवत्या गौर्या आदिष्टोऽमात्यो भर्तृदारिकायाः शम्बरको वर इति ।]

(मल्लिकामारुतौ विषादं नाटयतः)

**सारसिका** [1]– (जनान्तिकं)

सहि कालिन्दि सो एसो मिच्छापहिअस्स संबरअसीसस्स वञ्चणप्पहावो ।

[सखि कालिन्दि, स एष मिथ्यापथिकस्य शम्बरकशिष्यस्य वञ्चनप्रभावः ।]

**कालिन्दी** – (सखेदं)

हद्धि, मिलाअंतमुहकमलवण्णिअहिआवेआण मल्लिआमारुआण एआरिसं अवत्थं ण पारेमि

---

1. मु$_1$ omits the following dialogues, from सारसिका to द्रष्टुम् , see. next page.

पुलोअइउम्। [हन्त, म्लायन्मुखकमलवर्णितहृदावेग-योर्मल्लिकामारुतयोरेतादृशामवस्थां न शक्नोमि द्रष्टुम्[1]।][2]

**रमयन्तिका** - (जनान्तिकं)

महुअरिए, अमणोरमं आरद्धं मम्महेण, जो परप्परसरिसाणुराआ इमे[3] विहडइ ।

[(जनान्तिकं) मधुकरिके, अमनोरममारब्धं मन्मथेन, यः परस्परसदृशानुरागाविमौ[4] विघटयति ।]

**मारुतः** - (सनिर्वेदं, स्वगतं)

एतस्याः प्रथमावलोकसमये गाढं प्ररूढः क्रमात्
संवृद्धो धृतपल्लवः कुसुमितो मन्ये फलिष्यत्यपि ।
सोयं हन्त मनोरथद्रुरधुना शाखोपशाखाश्चितः
कष्टं हन्त[5] कृतान्तवैशसमहादम्भोलिना भज्यते ॥24॥

**मल्लिका** - (स्वगतं)

हा मल्लिए! एत्तिअमेत्तजीविअफलासि। हा[6] अम्ब, गोरि! कहं क्खसहथ्ये दिण्णह्मि!

[(स्वगतं)हा मल्लिके एतावन्मात्रजीवित-फलासि। हा अम्ब, गौरि! कथं राक्षसहस्ते दत्ताऽस्मि! ]

**मारुतः** - (मल्लिकावदनं विलोक्य, स्वगतं)

मातर्भवानि मयि दारुणदुःखदूने
मा नाम चित्तमनुतापपरिप्लुतं भूत् ।

---

1. पारयामि विलोकयितुम्, के$_{4-5}$
2. मु$_1$ omits till द्रष्टुम्।
3. अंअद्दे, म$_1$; adds अद्दे, मु$_1$
4. add. अकाण्डे, मु$_2$, अ$_1$, के$_{3-5}$
5. दग्ध, म$_{1-2}$, अ$_1$
6. अह [अथ] , मु$_1$

एनां [1]विषण्णवदनामवलोकयन्त्या
किं ते कृपाश्रुलुलितेन विलोचने स्तः ॥25॥

**कनकलता** [2]– णोमालिए ! अदस्सणेण अहिअं किलम्मइ भट्टिणि। ता झत्ति भट्टिदारिअं घेत्तूण गच्छह्म।

[नवमालिके, अदर्शनेनाधिकं क्लाम्यति भट्टिनी। तस्माज्झटिति भर्तृदारिकां गृहीत्वा गच्छावः।]

**नवमालिका** – (सविषादं)

इदो इदो भट्टिदारिआ ।

[(सविषादं) इतः इतः भतृदारिका ।]

**मल्लिका** – (सबाष्पगद्गदं)

[3]णअणाभिराम महाभाअ आपुच्छदि मरणेक्कसरणा मन्दभाइणी मल्लिआ ।

[(सबाष्पगद्गदं) नयनाभिराम, महाभाग, आपृच्छति मरणैकशरणा मन्दभागिनी मल्लिका ।]

**नवमालिका** – भअवदि, अम्बिए, दउल्लहहिअआसि। कहं तुह चरणेक्लाम्बणा मल्लिआ जीविदसंसअं आरोविज्जइ। अहवा ण एव्वं विहो तुह आदेसो।एदं वि तस्स संबरअसिस्सस्स वज्जणं तक्केमि।

[भगवति, अम्बिके, ननु दयार्द्रहृदयाऽसि। कथं त्व चरणैकालम्बना मल्लिका जीवितसंशयमारोप्यते। अथवा नैवंविधस्तवादेशः । एतदपि तस्य शम्बरकशिष्यस्य वञ्चनं तर्कयामि ।]

---

1. हृदयां, त$_2$ 2. कालिन्दी, मै$_1$ 3. add. अप्प ° [आत्म°] , मु$_1$

**सारसिका** – (जनान्तिकं)

कालिन्दि, सच्चं अहिहिदं[1] णोमालिआए ।

[(जनान्तिकं) कालिन्दि, सत्यमभिहितं नवमालिकया । ]

**कनकलता** – इदो इदो । [इतः इत :।]

**मल्लिका** – (स्वगतं)

हा मल्लिए, एत्तिअमेत्तजीविदफलासि! भअवदि[2] गोरि, कं रक्खसहत्थे दिण्णह्मि!

[(स्वगतं) हा मल्लिके, एतावन्मात्रजीवितफलाऽसि! भगवति गौरि, कथं राक्षसहस्ते दत्ताऽस्मि!]

(नवमालिकया[3] सह निष्क्रामति)

**रमयन्तिका** – सारसिए कहं वि मल्लिअं अणुगच्छामि। ण सक्कुणोमि आपुच्छिदुं जीविददाणमहोवआरिणं महाभाअम् ।

[सारसिके! कथमपि मल्लिकामनुगच्छामि । न शक्नोमि आप्रष्टुं जीवितदानमहोपकारिणं महाभागम् ।]

**सारसिका** –महाभाआ ! एसा तुए दिण्णं सरीरं धारअंती घरं गच्छइ रमअंतिआ ।

[महाभाग! एषा त्वया दत्तं शरीरं धारयन्ती गृहं गच्छति रमयन्तिका ।]

---

1. कहिदं [कथितं], $मु_2$, $त_2$ 2. हा अम्ब, $मु_2$ 3. रमयन्तिकया, $म_2$

**कलकण्ठः** – सन्तु गृहाः परिष्कृताः ।

**कालिन्दी** – सारसिए! पेच्छ पेच्छ! हिअउब्भरंतस्स दूसह भाविविरहवेअणाणुसंधाणसविसेसवड्ढन्तमअणाण लब्भमंणविसेस[1]दीहरणीसासं उद्दामविब्भमोल्लसिअ घुमआल[2]आकलिअकडक्खवेक्खि[3]दपणआणुराअ [4]सव्वस्सं सव्वङ्गिअसेअ[5]-सल्लिपत्तपरोप्परप्पोडिअ-बिम्बलद्धगाढपरिरम्भसहुब्भिण्णपुलअसालरमणिज्जं रमअंतिआ कलअंठाणं अवट्ठाणम् ।

[सारसिके पश्य पश्य । हृदयोद्भिद्यमानदुस्सहभाविविरह-वेदनानुसन्धानसविशेषवर्धमानमदना नलभ्रमणविशेष-दीर्घनिश्वासं, उद्दामविभ्रमोल्लसितभ्रूलताकलितकटाक्ष-व्याख्यातप्रणयानुरागसर्वस्वं सर्वाङ्गीणस्वेदसलिलप्राप्त-परस्परप्रतिबिम्बलब्धगाढपरिरम्भसुखोद्भिन्नपुलक-जालरमणीयं रमयन्तिका कलकण्ठयोरवस्थानम् ।]

**कलकण्ठः** – (सानुरागं, स्वगतं)

प्रणयचपलाः प्रेमस्फारा प्रसूतमनोभुवः
क्षपितधृतयश्चोराश्चलाचलतारकाः ।
शिव शिव मयि प्रेङ्खन्त्यस्यास्तरङ्गितघूर्णित-
स्तिमितमधुरस्निग्धा मुग्धा विलोचनविभ्रमाः ॥26॥

**मधुकरिका** – इदो इदो । [इतः इतः ।]

---

1.धूमणिव्विसेस° [धूमनिर्विशेष°],$मु_2$,$म_2$ 2. मालिआ,[मालिका], $मु_1$
3.पेक्खिद°[प्रेक्षित°],$मु_1$ 4.णअणराअ°[नयनराग°],$मु_1$ 5.सोअ°[शोक°],$मु_1$

**रमयन्तिका** – (अपवार्य)

मधुअरिए, कदा पुणो वि पेक्खिस्सं पुण्णचन्दसुन्दरं महाभाअम् ?

[(अपवार्य) मधुकरिके, कदा पुनरपि पश्यामि पूर्णचन्द्रसुन्दरं महाभागम् ?]

**मधुकरिका** – सहि, अग्गओ रुद्दराओ संबरअपक्खवदित्ति संकीअदि। अण्णहा सुलहं खु दंसणं अण्णंवि।

[सखि, अग्रजो रुद्रातश्सम्बरकपक्षपातीति शङ्क्यते। अन्यथा सुलभं खलु दर्शनं अन्यदपि ।]

(रमयन्तिका निःश्वस्य कथं कथमपि निष्क्रामति)

**मल्लिका** –णोमालिए , इदोवरं दुल्लहदंसणं कण्णन्तदीहरविसाललोअणपुण्डरीअं पुणो कदा पेक्खिस्सं महाभाअस्स मुहचन्दमण्डलम् ?

[नवमालिके, इतः परं दुर्लभदर्शनं कर्णान्तदीर्घविशाललोचनपुण्डरीकं पुनः कदा पश्यामि महाभागस्य मुखचन्द्रमण्डलम् ?]

(इति विवलितवदना सबाष्पं पश्यति)

**सारसिका** – कालिन्दि, पेच्छ सकरुणाणुराअणिवट्टिअमुहचन्दाए, मल्लिआए वाहपुरपूरिआइ तुसार कणकरम्बिअकमलकलिआमित्ताइ णेत्ताइ। ता अम्महे गदुअ आसासणिज्जा।

[कालिन्दि, पश्य, सकरुणानुरागनिर्वर्तितमुखचन्द्राया मल्लिकाया बाष्पपूरपूरिते तुषारकण-

करम्बितकमलकलिकामित्रे नेत्रे। तस्मादावाभ्यां गत्वा आश्वासनीया।]

**कालिन्दी**–महाभाअ! एव्वं ट्ठिएण पहवन्ति चलणा फन्दिदुंवि। [महाभाग! एवं स्थितेन प्रभवतश्चरणौ स्पन्दितुमपि।]

**मारुतः** – अनुसर्तव्या भवतीभ्यां मल्लिका।

**कालिन्दी** – महाभाअ, एदं वि वाराणसीपहिअवअणादो अणदिरित्तं मण्णहि। सारसिआ[1] भणइ तस्स[2] वि आआसवाणीए विअ सरोत्ति।

[महाभाग, एतदपि वाराणसीपथिकवचनादनतिरिक्तं मन्यस्व। सारसिका भणति, तस्याप्याकाशवाण्या इव स्वर इति।]

**कलकण्ठ[3]**:– सारसिके, अपि श्रुतं त्वया आकाशभाषितम्?

**सारसिका** – अह इम्? [अथ किम्?]

**कलकण्ठः[4]** – (स्वगतं) युज्यत एतत्। एतादृशानि तत्रास्य दुर्नयविलसितानि।

**मारुतः** – (स्वगतं) आश्वासनानि खल्वेतानि।

(प्रकाशं)

कालिन्दि, स एष मल्लिकाया सीमन्लालितोमणिः।

(इत्यर्पयति)

---

1.adds. वि [अपि], मु₁ 2.अस्स, मु₁

3. and 4. मु₁ wrongly reads कालिन्दी for both the passages.

**कालिन्दी** – (आदाय)

हन्त, अण्णेसिदो वि एसो नदिट्ठो अह्महिम् ।

[(आदाय) हन्त, अन्वेषितोऽप्येषो न दृष्टोऽस्माभिः।]

(निष्क्रामतः)

**मारुतः** – (निश्वस्य)

मूर्च्छा स्वेष्ठं स्फुरन्तु द्यतु वपुरिषुभिः पूर्णकामः स कामी
भूयादाधिः समिन्धां [1]रणरणिकपरिस्फूर्तिरूर्जस्वलास्तु ।
वैधुर्यं वर्धतां द्राक् द्रवतु धृतिरपध्वंसतां सौख्यचिन्ता
हन्तासौ तुल्यरागं जनमसुलभयन्नस्तु धाता कृतार्थः ॥27॥

**कलकण्ठः**–सखि,युवयोर्मल्लिकामारुतयोरनुरूपपाणिग्रहण–मङ्गलं सर्वमङ्गला न संमन्यत इति कथमेतत् सङ्गच्छेत।

पश्य –

मूर्तौ युवां प्रसादौ यस्याः [2]परिवस्यया प्रसन्नायाः ।
तद्वचनोपज्ञमिमं प्रत्यूहं नैव विश्वसिमः ॥ 28 ॥

**मारुतः** – कलकण्ठ, विचित्रेषु कर्मणां विपाकेषु कथं नाम[3] विश्वसनीयमेतत् ! पश्य –

शुभमित रद्धा प्राच्यं कर्मसुखं दोग्धि दुःखं वा ।
दैवं पुनस्तटस्थं तदुभयमनुभावयदुदास्ते ॥ 29 ॥

**कलकण्ठः**–कथमेवं भाषसे? प्रत्यक्ष एव कलविङ्कवृत्तान्तो वयस्यस्य ।

---

1.° रणक, $त_2$, $मु_2$ 2. वरि °, $मु_2$ 3. add न, $अ_1$, $मु_2$

**मारुतः** – (विचिन्त्य)

हन्त संशये स्थापितोऽस्मि ।

(स्वगतं)

किमत्र कर्तव्यम् ?

(सावष्टम्भम् )

प्रणतजनपारिजातवल्ली भवानीं प्रसादयिष्यामि ।

गत्वा गौरीगृहानेको मोक्ष्ये वा निष्फलानसून् ।
आराध्य देवीं शर्वाणीं लप्स्ये वा मल्लिकां प्रियाम् ॥ 30 ॥

(प्रकाशं)

सखे कलकण्ठ, तवापि हृदयमनुप्रविष्टैव रमयन्तिका ।

**कलकण्ठः** – (सलज्जस्मितं)

सत्यमुपलक्षितं वयस्येन ।

उद्भिन्नबाष्पकणिकानुपगूढभावा-
नुत्कण्ठितान्मयि मुहुः क्षिपती कटाक्षान् ।
सेयं नितम्बभरमन्थरमन्दयाना
यान्ती गृहानपि सखे हृदयं क्वगता मे ॥31॥

**मारुतः** – कलकण्ठ, कथमेनां जिघृक्षमाण एव मदकरिणिखादवप्लुतोऽसि ?

**कलकण्ठः** –अहं खलु भ्रमरकमात्रपरिजनं वसन्तवनगतं वयस्यमुपश्रुत्य त्वरितमुपगच्छन् मध्येसरणि सन्निहितया सारसिकया सोमसरः कूलं नीतोऽस्मि ।

1. ° शिल्य, मु,

**मारुतः** -ततस्तः ?

**कलकण्ठः** - ततश्च -

स्नातोत्थिता सलिलबिन्दुतरङ्गिताङ्गी
सा सुन्दरी तटगते मयि दत्तदृष्टिः ।
संसक्तसूक्ष्मविमलाम्बरलोभनीय-
श्रोणीभरा मनसि मे लिखिता स्मरेण ॥ 32॥

**मारुतः** - सखे, हृदयङ्गमानि खलु तरुणिमशिल्पि[1]-समुल्लसितानि नितम्बिनीनामङ्गकानि, विशेषतः स्नातोत्थितानम् ।

**कलकण्ठः**-ततश्च, तत्कालाढौकितस्य मदेभस्य झटित्यारूढपादपः स्कन्धदेशमास्कन्दितवानस्मि ।

**मारुतः**- (सहर्षं)

[1]दिष्टया मृत्युहस्तादच्छिन्ना रमयन्तिका ।

**कलकण्ठः** -

धृतहलहलितैः द्राक् स्तूयमाने जनौघैः
मयि पतति वियत्तः कण्ठपीठीं गजस्य ।
शिव शिव समवेगत्रासहर्षानुराग-
व्यतिकरकृतमूर्च्छाविप्लुतासीन्मृगाक्षी ॥33॥

**मारुतः** - (स्वगतं)

एनमपि सारसिका नीतवती ।

(प्रकाशं)

---

1. $मु_1$ omits from दिष्ट्या to अद्राक्षम् ।

ततस्ततः ?

**कलकण्ठः** – ततश्च सलिलक्रीडान्ते सरोमध्यादुत्तिष्ठन्तीं जलनिधिमध्यादिव रमां रमयन्तिकामद्राक्षम् ।

**मारुतः** – सखे, सिद्धमेवाभिलषितं मन्यस्व । पश्य–

तद्रूपविभ्रमविवर्तितरागवृत्तिः
प्रागप्यसौ तव वयस्यकरं गतैव ।
अद्य प्रसह्य [1]चिकुरग्रहयालुहस्ता-
दुन्मोचिता किमुत दुष्टमतङ्गजेन्द्रात् ॥34॥

**कलकण्ठः** –वयस्य, अस्याः पुनरग्रतो रुद्रातनामा शम्बरकपक्षपातीति सन्दिह्यते ।

**मारुतः** – किमेतावता ?

समहृदयौ चेत्तरुणौ किं प्रतिकूलेन बन्धुवर्गेण।
अनुकूलेनापि [2]पुनर्नार्थस्तौ चेद्विरागौ स्तः ॥ 35 ॥

तद्यामः शिबिरम् ।

(इति निष्क्रान्ताः सर्वे)

उद्दण्डं रङ्गनाथः सुतमलभत यं रङ्गदेवी तथाम्बा
त्रैविद्येशो महर्षिर्निरवधिमहिमा यद्धिते जागरूकः ।
तस्य श्रीविक्रमाज्ञाबहुमतिरचिते मल्लिकामारुतेऽस्मि-
न्निर्वृत्तो भूच्चतुर्थः प्रकरणतिलके निष्कलङ्कोऽयङ्कः ॥[3]



---

1. चिकुराग्रविसारि °, मु, 2. जनः, अ
3. मु, omits the verse; reads. इति चतुर्थोऽङ्कः ।

## ॥ पञ्चमोऽङ्कः ॥

(ततः प्रविशति विप्रवेषधरो[1] राक्षसः)

**राक्षसः** – अहो अतिमनोहरं अकुतोभयमस्मत्कुलचरित्रम् ।

निर्वर्त्यन्ते नृमांसैर्निणरणविधयः पीयते रक्तसीधुः
स्वेच्छासंभोगसौख्यं भवति हठहृतैरन्यदारैरुदारैः ।
वैतानीनां क्रियाणां विमथनमधिकं जायते दृष्टिवृद्ध्यै
केन स्वच्छन्दहृद्यं न भवति तदिदं राक्षसं जन्म तुष्ट्यै ॥1॥

मया पुनरतिशोच्योऽस्मज्जातिविरुद्धोऽप्ययं वेषः, सिंहलद्वीपवासिनः सख्युर्विकटग्रीवस्य कृते समभ्युपगतः । आदिष्टोऽस्मि हि[2] प्रियसखेन । "सखे खड्गजिह्व ! सन्ति मे त्वयापि दृष्टानि त्रीणि विशिष्टानि वस्तूनि । एकं सकलमूर्च्छाहरं रत्नं, अपरं चित्रमयं कन्यारत्नं, अन्यद्विमलं दिव्याम्बरञ्चेति । पातितानि[3] च तानि प्रमादेन लङ्कापुरगमन-संभ्रमाकुलेन मया मन्निवास एव वटमूले, कथितश्च लङ्कापुरवास्तव्यैः दैवज्ञैरेतद्वस्तुत्रयनाशादर्वागल्पीय एव ममायुरिति । अतस्तदन्वेषणाय त्वया प्रयतनीयम्" इति ।

(सहर्षं)

दृष्टश्च विप्रवेषधरेणान्विष्यता मया तदस्मिन्नेव कुसुमपुरे ।

(सविस्मयं)

---

1. विप्रवेषधारी, मु$_1$ 2. add तेन, मु$_2$ 3.पतितानि, मु$_1$

अहो या सा तादृशसौन्दर्यनियन्त्रितसकल-लोकलोचना चित्रकन्या[1], यश्च दुकूलाञ्चललिखितो [2]मरकतस्तम्भस्निग्धस्तरुणः ताविह सत्यावेव[3] स्तः ।

(विहस्य)

मोष्टारावपि तावेव ।

(विकटं परिक्रम्य, पुरोऽवलोक्य)[4]

कोऽयं सायंसन्ध्यावकारविरलसञ्चारमप्यन्धकारं मेदुरयन्नभ्रंकषस्तमालप्रायो[5] महानारामः ?

(निर्वर्ण्य)

मन्ये, कुसुमपुरोपकण्ठवासिन्याः कात्यायन्या विहारक्रीडा इयम् । यः शर्वरीषु तत्कालसन्निधान-सकलपरिवारमण्डलो मनुजदुष्प्रवेश्य इति श्रूयते। तथाहि[6]-

क्रीडन्ति प्रमथार्भकास्तत इतो मूलेषु पृथ्वीरुहां
श्रूयन्ते घनगर्जितप्रतिभटा हेरम्बकण्ठीरवाः ।
दूरादेव पुरद्विपैः परिहताः[7] सन्त्रासफीट्कारिभिः
वान्त्येतेऽपि च गौरिकेरिसटासङ्घट्टिनो मारुतः ॥2॥

(साशङ्कं)

तदस्माकं दुरुपसर्पोऽयं देशः । निसर्गद्वेषिणी [8]इयं खलु असुरराक्षसेषु मायाविनो[9] वसुदेवनन्दनस्य सोदरी अस्त्रीसामान्यप्रभावा दुर्गाः[10] । तथा हि-

---

1. °कन्यका 2.मरकतभङ्गरुचि, $मु_1$ 3.ताविहस्त्यावेव, $मु_1$ 4.परिक्रामति, पुरतो विलोक्य, $मु_1$ 5. तमालहिन्तालप्रायो, $त_2$ 6. add अद्य, $मु_2$, $त_2$ 7. परिहताः ,$मु_2$, $त_2$ 8. om इयं, $मु_1$ 9.मायविदो, $मु_2$ 10. पराक्रमा च, $मु_2$, $त_2$

एषा विषाणकोटिव्यस्तमहेन्द्रोपवाह्यस्य ।
अपिषन्महिषस्य शिरः किसलयमुग्धेन चरणेन ॥ 3॥

अथवा, कातरजनप्रशंसागोचरोऽस्या विक्रमः ।

प्रागस्मद्वंशजातः[1] स किल दशमुखो द्रागुदानेष्टदोष्णां
स्थेमानं सन्दिदृक्षुः चटचटिति समुत्पाट्य कैलासमद्रिम् ।
किं ब्रूमस्तामवस्थां प्रचलति शिखरे भीरुरन्तर्हसन्तं
नत्वा श्लिष्यत्स्वदोर्भ्यां [2]पुरमथनमियं चाटुवादानपेक्षम् ॥4॥

(मार्गान्तरेण परिक्रामति । अग्रतो विलोक्य, सकौतुकं)

कोऽयमभिनवारूढयौवनारम्भो[3] गजकुमारमन्थर-रसञ्चारः प्रविविक्षत्यविशङ्कमेनं [4]दुर्गायतनारामम्? य एषः-

गरुडशिलारुचिः [5]शरविपाण्डरगण्डतलः
पृथुभुजदण्डमण्डन[6]करालकृपाणलतः ।
नयनविलोभनोऽपि च निभर्ति भयङ्करतां
विटपनिषण्णमेचक[7]फणीव पटीरतरुः ॥ 5 ॥

(निर्वर्ण्य)

अये सोऽयमस्मद्दुकूलाञ्चललिखितस्तरुणः । यस्याम्बरे[8] सा चित्रकन्या ।

(साशङ्कं)

दूरादेव तमस्यपि धाम्ना स्वेनैव लक्ष्यमाणवपुः ।
मन्ये दुरासदोऽयं मृगपतिरिव यौवनोद्रिक्तः ॥ 6 ॥

---

1.मौलिः, $मु_2$, $अ_1$ 2. नन्वाश्लिष्यत्स्वयं तं स्मर °, $त_1$, $त_2$, $मु_2$, $अ_1$
3. add गन्ध, $मु_2$, $त_2$, $अ_1$ 4. अम्बिका, $मु_2$, $त_2$, $अ_1$ 5.किमपि, $मु_2$,$त_2$
6. ल, $मु_1$ 7.° भीषण, $मु_2$, $त_1$, $त_2$ 8. वशे, $मु_2$,$त_2$, $अ_1$

तन्मन्ये दुर्ग्रहैव एतत्करवर्तिनी चित्रकन्या। अथवा सत्यां सत्यकन्यायां किं चित्रकन्यया। तद्यावन्मणिकूटशिखरागतस्य सख्युर्विकटग्रीवस्य सर्वमिमं वृत्तान्तमावेद्य[1] स्वेच्छं गच्छामि।

(नभो विलोक्य)

अस्मत्सञ्चरणोचितश्चायं समयः। तथाहि-

यदिह नवनवासृग्धोरणीदिग्धमांस-<br>
प्रचयमिव नभोन्ते साध्यमैधिष्ट तेजः।<br>
तदखिलमतिदृप्तै[2]र्यातुधानैरिवेतैः<br>
समसमयमघासि ध्वाङ्क्षवृत्या तमोभिः ॥7॥

(इति निष्क्रान्तः।)

॥ शुद्धविष्कम्भः ॥

(ततः प्रविशति यथानिर्दिष्टो मारुतः)

**मारुतः** - (साशङ्कं)[3]

किं[4] पात्रीस्यामकृतकघनप्रेमविस्फारितानां<br>
सव्रीडानां सकलकरुणानन्दनाडिन्धमानाम्।<br>
तेषां तेषां हृदयनिहिताकूतनिष्यन्दिनेत्र-<br>
व्यापाराणां पुनरपि तथा सुभ्रुवो विभ्रमाणाम् ॥8॥

हन्त[5], पुनरिदमेव स्मारं स्मारं [6]प्रतिसारं हृदयम्।

---

1. निवेद्य, $त_2$, $अ_1$ 2. अवलिप्तैः, $मु_2$, $मै_3$ 3. साशंसं, $मु_2$, $त_2$ 4. आः, $मु_1$
5. add पुनः, $मु_2$, $अ_1$, $के_2$ 6. add स°, $मु_2$, $के_2$

अन्येन पाणिमवरुद्ध्य[1] जिघृक्षमाण[2]-
मन्तर्विभिन्नहृदया सदयं[3] प्रयान्ती ।
वक्त्रं तदिन्दुमधुरं परिवृत्य[4] भूयो
बाष्पाकुलोक्षणमवैक्षत यन्मृगाक्षी ॥9॥

(पुनः साशंसं)

तदङ्गमपि नाम तत्सहजकान्तिपूराप्लुतं
सुवर्णकदलीदलोद्दलितगर्भगौरं पुनः ।
कठोरमदनव्यथापिशुनपाण्डिमाधिष्ठित-
[5]प्रथिमकुचमण्डलं परिरभेय वीक्षेय वा ।10॥

अथवा अनुभूयत[6] एवैतत् ।

आसीनः शयितस्थितः प्रचलितः स्वप्नायितो जागृविः
पश्यन्मीलितलोचनो व्यवहरन्मौनं प्रपन्नोऽथवा ।
तां प्रेमाकुलवीक्षितां स्मितमुखीं सव्रीडमन्दागमां
श्लिष्यन्तीं प्रणयार्द्रमुग्धलपितां पश्यामि नक्तंदिवम् ॥11॥

(अग्रतो विलोक्य, सहर्षं)

कुरवकचम्पककेसरतमालहिन्तालमण्डलाकीर्णम् ।
अपहसितनन्दनवनं तदिदं कात्यायनीगृहोपवनम् ॥12॥

(सानुशयं)

एतत्खलु निशि निशि साक्षाद्भवत्सर्वसुपर्ववृन्दतया मनुजैः दिवसैकगम्यमिति श्रूयते ।

---

1. अवबुद्ध्य, $मु_2$ 2. जिघृक्ष्यमाण°, $मु_2$ 3. सदनं, $मु_2$, $के_2$
4. परिवर्त्य, $मु_2$, $के_1$ 5. प्रथिष्ठ °, $मु_2$ 6.अपि भूयः, $मु_1$

(नेपथ्ये कलकलः)

**मारुतः** –( विलोक्य, सविस्मयानन्दं)

अहो अहंपूर्विकाप्रणमनावर्जित मणिकिरीटपरस्परसङ्घट्टनक्षतस्वस्तरुकुसुमापीडैर्निबिडितं[1] मृडानीभवनमुपर्युपर्यम्बरमापतद्भिरमृतान्धोभिः ।

(निर्वर्ण्य, सकौतुकं)

अवतरति विचित्रदर्शनोऽयं
विकसितनेत्रपरम्परो बिडौजाः ।
कमलवनवृतो मरुद्भिशीर्णो
नभस इवामरसैन्धवः प्रवाहः ॥ 13 ॥

(सबहुमानं)

त्रैलोक्यं भ्रूविधेयं बलिजिदवरजः सेवितारो निलिम्पाः
सन्तृप्त्यै सप्ततन्तुस्तुतिरकृतकवाग्गीष्पतिः स्वस्तिवादः ।
स्वर्णाद्रिः सद्मवापी गगनसरिदहो निष्कुटः कल्पवाटः
पौलोमीनेत्रपेयं वपुरिह किमिति श्लाघ्यता[2] नो मघोनः ॥14॥

(अन्यतो विलोक्य)

कोऽयं तडिदालोक इव प्रतिहन्ति नयनरश्मीनकिंपचानप्रकाशः ।

(विभाव्य)

साधारणं क्रतुभुजां वदनं, पुरस्त्री-
सौभाग्यलोपि गिरिशस्य तृतीयमक्षि ।

---

1. निपीडितं, $मु_2$, $त_2$, $मै_3$ 2. श्लाघ्यते, $त_1$, $अ_1$

तेजस्तिरस्कृततमश्चयमाविरस्ति
स्वाहातपःफलमुषर्बुध एव[1] साक्षात् ॥ 15 ॥

(सस्मितं)

मन्ये एतद्दर्शनादीषदुन्मिषितमन्दाक्षं स्मरिष्यति स्मरदाहस्य हरमहिषी ।

(अन्यतो विलोक्य)

अयमेष[2] भीषणोज्ज्वलाकृतिः भगवान् श्राद्धदेवः[3] ।

प्रादुर्भाद्दुरितहतात्मनां जनानां
प्रायश्चित्युपकृतये प्रयुक्तदण्डः ।
देवस्य प्रियतनयः सरोजबन्धोः
केन स्यात् पितृपतिरेष नो नमस्यः ॥16॥

(विहस्य)

हन्त, अदसीयस्यौपवाह्यस्याकस्मिकोऽयं सम्भ्रमः ।

तथाहि –

नमस्तुभ्यं मातर्महिषमथनीति प्रणमतां
गिरो गीर्वाणानां भयचकितमाकर्ण्य परितः ।
निरुद्धोऽपि स्वीयैर्जवधुत[4]विषाणप्रतिभयो
घणात्कुर्वन्घण्ठां द्रवति महिषो दक्षिणदिशम् ॥17॥

(अन्यतः[5] चक्षुषी चारयन्, साशङ्कं)

---

1. एष, $त_2$ 2. इह, $मु_1$ 3. $त_2$ reads श्राद्धदेवः । All other mss., $मु_{1-2}$ read मृडदेवः 4. युत, $त_2$ 5. अन्यत्र, $मु_2$

विकटवदनो विद्युत्पुञ्जप्रकाशशिरोरुहो
धृतनरशिरोमालस्तालप्रमाणमहाभुजः ।
ज्वलननयनः [1]शालप्रांशुःश्रुतोऽपि भयङ्करः
क इह गगनाभोगात् दीप्यन्नवातरदेककः[2] ॥18॥

(विमृश्य)

मन्ये, स एष रक्षः पतिः निर्ऋतिः यो दिक्पालपङ्क्तिनिविष्टः पठ्यते ।

(विहस्य)

अहो महत्सौहार्दमस्मिन्नम्बिकापरिवारवर्गस्य ।

प्रत्युद्गच्छन्त्यग्रे श्लिष्यन्ति स्वागतानि पृच्छन्ति ।
कथयन्त्यवसरमुचितं प्राप्तेऽस्मिन्निर्ऋताविह प्रमथाः ॥19॥

(स्पर्शसुखमनुभूय)

कथमिदं शीतलह्रदमग्नमिवाच्छन्नमङ्गम् ?

(विलोक्य)

मधुराननो धृतहारकुण्डलो नयनं धिनोति सलिलाधिपतिः ।
परिपूर्णशीतकरबिम्बधरः नभसोऽवकाश इव तारकितः ॥20॥

अहो इतरतेजः परिभावुकमेतस्य तेजः ।

अथवा –

---

1. शैल °, $मु_2$, $अ_1$  2. गगनाभोगं रुन्धे घनाघनमेचकः, $म_2$, $मु_2$, $त_2$

नाद्भुतमिदं यदन्यत् न्यग्भावयति[1] प्रचेतसस्तेजः ।
इदमध्युषितामाशां प्राप्य च निर्वान्ति[2] येन तेजांसि ॥21॥

(अन्यतोऽवलोकयन्, सौरभातिशयं विभाव्य)

क एष तावत् सकलेन्द्रियतर्पणेन[3] परिमलेन लिम्पतीव प्रपञ्चम् ?

(निर्वर्ण्य)

कृत्स्नं येन श्वसिति भुवनं मित्रवान् वीतिहोत्रः
लब्धाहारं फणधरकुलं शम्भुरन्यूनमीर्तिः ।
सोऽयं चूडाकलितसुमनः[4] शेखरोद्भिन्नमाध्वी-
लुभ्यद्भृङ्गी निनदमुखरं गन्धवाहः समेति ॥ 22 ॥

(सस्मरणमिव)

कथमेतद्दर्शनेन किमप्युत्सुकमिव हृदयम् !
हृष्यति हृषीकमस्मिन् स्वात्ममतिर्जायते च किमिदं मे ।

(सस्मितं)

अथवा समाननाम्नां सङ्गे स्यादैक्यधीर्यथा पयसोः ॥23॥

(कथमप्यन्य[5]तश्चक्षुराकृष्य)

कोऽयमेकःपिङ्गलाभ्यां नयनाभ्यां[6] सन्निधत्ते समग्रभूषणमणिप्रभाशकलितशार्वरान्धकारोन्मेषः पुरुषोद्धः[7] ।

---

1.संभावयति, $त_2$ 2. निर्यान्ति, $म_1$, $के_2$ 3. सन्तर्पणेन, $मु_2$
4.° स्खलित, $त_2$ 5. अन्यत्र, $मु_2$ 6.om. नयनाभ्यां, $मु_1$
7. पुरुषोधः, $मु_1$

(विभाव्य)

अस्तोकसम्पदलकापुरसार्वभौमः
स्वक्षौणिभृत्तटनिवेशितचन्द्रचूडः[1] ।
[2]यक्षाधिराज्यकमलातडिदम्बुवाहो
दिक्पालमौलिमणिरैलबिलस्स[3] एषः ॥24॥

[4](सप्रश्रयहर्षं)

अहो अवाङ्मनसगोचरं मम सौभाग्यम् । तथाहि,

देवोऽप्येष पुरान्तको नयनयोरध्वानमाढौकते
दूरादेव सुरैर्विमुक्तसरणिः दुग्धेदुकुन्दच्छविः ।
उच्चैरुल्लसदौपवाह्यवृषभस्कन्धानुवृत्तिस्खल[5]-
च्चूडावल्गितसिद्धसिन्धुलहरीझाङ्कारकोलाहलम् ॥25॥

सम्प्रति हि -

नाथे समेयुषि समीपमुपोढहर्षं
उत्थाय देव्यपि कुचस्खलितोत्तरीया[6] ।
प्रायः ससंभ्रमतया करदत्तहस्ता
प्रत्युद्गमिष्यति शनैः कतिचित्पदानि ॥26॥

(पुनर्विलोकयन् )

अतिमनोहरं वर्तते ।

---

1. चन्द्रमौलिः, $त_2$ 2. तनया 3. मणिरेषविलिप्त °, $मु_1$
4.add अन्यतो दत्तदृष्टिः, $म_2$ 5. स्पन्द, $मु_2$ 6.° स्खलदुत्तरीया, $मु_2$

गन्धर्वसिद्धसुरकिन्नरसुन्दरीणा-
[1]मासामुदारनयनैर्वदनारविन्दैः ।
सञ्जायतेऽद्य परितः परिपूर्यमाणं
सम्पूर्णचन्द्रशतदन्तुरमन्तरिक्षम् ॥ 27 ॥

यावदेनां प्रणमामि ।

इष्टानिष्टापाद[2]कच्छेदकेभ्यः शक्रादिभ्यो दिक्पतिभ्यो नमोऽस्तु।
सर्वैरेतैः सर्वदोपासितायै देव्यै भूयः शैलपुत्र्यै नमोऽस्तु॥ 28॥

(इति प्रणम्य, ऊर्ध्वमवलोक्य)

हन्त ! शून्यमेव गगनतलम् !

न सुरा नाशापतयो नाप्सरसो नो विमानानि ।
पुनरपि तदेव केवलमवशिष्टं भीषणं तिमिरम् ॥29॥

मन्ये निर्वर्तितशर्वाणिदर्शनैर्गतमेव गीर्वाणैः ।

(सहर्षं)

अत्र मम पक्त्रिमाणि प्राश्चिप्रायस्तपांसि सम्यश्चि ।
देवोऽपि सार्धममरैर्येन प्रत्यक्षितस्त्र्यक्षः ॥ 30॥

(विमृश्य)[3]

तदिदानीमवसरो मम सर्वमङ्गलाचरणमूलोप-सर्पणस्य । यावदुपसर्पामि ।

(परिक्रामन् , साशङ्कं)[4]

---

1. मधुरैः, के$_1$ 2. प्रापक॰ , त$_2$ 3. om. विमृश्य, मु$_1$
4. साशंसं, म$_2$, मु$_2$

अपि नाम प्रसीदेदम्बिका ?

उपचितघनरागो रागकल्पव्रतत्याः
प्रसभमखिलविघ्नध्वान्तसङ्घस्य दृष्टया ।
कमलमिव करेण प्रातरर्को नलिन्याः
कुवलयनयनायाः किन्तु पाणिं ग्रहीष्ये ॥31॥

(अग्रतो विलोक्य)

इदमुपवनद्वारम् , यावत्प्रविशामि ।

(प्रवेशं नाटयन् , स्खलनमभिनीय, सनिर्वेदं)

कथमिदमविषमेऽपि[1] स्थले स्खलितचरणः अथवा इहैव स्थित्वा प्रसादयिष्यामि देवीम् ।

(कृताञ्जलिः)

बलद्विषि [2]गतत्विषि द्रविणराजि हाहासृजि[3]
प्रचेतसि विचेतसि त्रिनयने त्रपामीलने[4] ।
मुरद्रुहि रणद्रुहि त्रिभुवनद्रुहो मस्तकं
ममर्द महिषस्य यत्तदिह नौमि देव्याः पदम् ॥32॥

(आकाशे, सश्लाघं)[5]

केलीलापो[6] व्यरंसीन्न किल विजयया सार्धमाबध्यमानो
नाकृष्टा दृष्टिपाताः किल विजयजुषः चन्द्रचूडस्य वक्त्रात् ।
उत्क्षिप्ते पादपद्मे किल मणिकटको नोच्चकैर्वा शिशिञ्जे
मातः शैलेन्द्रकन्ये महिषविमथनं नाम कोऽयं विलासः ॥33॥

---

1. समे, म$_2$, मै$_3$, त$_2$, मु$_2$, के$_1$, के$_2$ 2. गल°, मु$_2$, के$_2$ 3. दीनाशये, मु$_2$, त$_2$ के$_2$, मै$_4$
4. °मीलिते, मु$_2$, त$_{1-2}$, मै$_1$, मै$_2$, मै$_4$ 5. साशंसं, म$_2$ 6.° रावो, मु$_1$

(निमित्तं सूचयित्वा)

दुर्लभे[1] प्रियतमापरिरम्भे[2] स्पन्दसे किमिति दक्षिणबाहो ।
हन्त वेत्सि न गिरं गगनोत्थां मल्लिकाविघटनैककठोराम् ॥34॥

(निश्वस्य, आकाशे)

तत्तादृशं युवतिरत्नमदृष्टमूल्यं
दुष्प्रापमल्पसुकृतस्य ममेति[3] युक्तम् ।
त्वद्वाक्यमत्र किल यत्र जनित्वमूलं[4]
तत्किं तवाम्ब सदृशं करुणार्द्रतायाः ॥ 35 ॥

अथवा स्वकर्माधीनसुखदुःखः किमित्युपालभे देवीं अतदर्हां कात्यायनीम् । अतः प्रियतमालाभनिष्फलजीवितः[5] तोषयिष्यामि स्वयमुपहृतैरहंकुसुमैरार्याम्[6] ।

(पुनश्चाकाशे)

पश्याम्बिके प्रणतकामितकल्पवल्लि
सा मल्लिका प्रियतमा यदि दुर्लभा स्यात् ।
अस्तु स्वहस्तकरवालविदूनकण्ठं[7]
वक्त्रं ममाद्य पदयोस्तव रक्तपद्मम् ॥ 36 ॥

(इति कौक्षेयकमुत्क्षिप्य, सप्रार्थनं)

अस्तु मम भक्तिरतुला त्वत्पादयोर्देवि पद्मपाटलयोः ।
अपि च जननान्तरे वा प्रेयस्या सङ्गमोस्तु मल्लिकया ॥37॥

---

1.दुर्लभ°, मु$_2$,के$_1$ 2. °परिरम्भ°, मु$_2$,के$_1$ 3.° सुकृतेन मयेति, मु$_2$,मै$_3$
4.यत्वजनिष्ट मूलं, मु$_2$,त$_2$ 5. निस्सम्बलजीवनः, मु$_1$; निष्फलजीवनः,म$_2$
6.°असु, मु$_2$,त$_2$,म$_1$,के$_1$ 7. विलून °, त$_2$

(इति खड्गं कण्ठे न्यस्यति) (आकाशे) –

हा णाह मारुअ ! परित्ताअसु,परित्ताअसु ! कहं णं पेच्छसि मं रक्खसहत्थगअं णं तुए पुडमं वि कुञ्जरहत्थादो रक्खिदह्मि। हा अम्ब गोरि ! सच्चं रक्खसहत्थे दिण्णह्मि । हा ताद, हा अम्ब, एसा हदह्मि तुह्माणं गोरिप्पसादलद्धं एक्कउत्तो मल्लिआ । हा माइणिब्विसेसे भअवदि एषा तुहअस्समसमीवे ण णीदह्मि । जाए सिणेहेण हिमागिरिं उज्झिअ आगआइ। हा सहि णोमालिए, हा कालिन्दि, दुल्लहं इदोवरं तुह्माणं दंसणम् ।

[हा नाथ मारुत, परित्रायस्व, परित्रायस्व । कथं न पश्यसि मां राक्षसहस्तगतम् । ननु त्वया प्रथममपि कुञ्जरहस्ताद्रक्षिताऽस्मि। हा अम्ब गौरि ! सत्यं राक्षसहस्ते दत्ताऽस्मि । हा तात, हा अम्ब, एषा हताऽस्मि युवयोः गौरीप्रसादलब्धा एकपुत्री मल्लिका । हा मातृनिर्विशेषे ! भगवति ! एषा तवाश्रमसमीपे न नीतास्मि ? यस्यां स्नेहेन हिमगिरिमुज्झित्वा आगतासि । हा सखि, नवमालिके, हा कालिन्दि, दुर्लभमितः परं युवयोर्दर्शनम् ।]

**मारुतः** – (ससंभ्रमाकूतं खड्गं कण्ठादपनयन् )

कथमयं गगनगोचरः करुणकरुणो मल्लिकायाः स्वरः?

(सविषादवितर्कं)

किं प्रासादशिरःस्थिता जलधरैर्नीता तडित्शङ्कया
किं वा मण्डयितुं दिवं सह सुरैराखण्डलेलोद्धृता ।
आहोस्वित् शशिनः कला निपतते धात्रा स्वयं शम्भुना
केन व्योमनि भीरुरार्तकुररी तारस्वरं क्रन्दति ॥38॥

(ऊर्ध्वमवलोक्य)

हन्त ! महान् प्रमादः !

कोऽप्येष व्योम्नि घोरश्चय इव तमसां भीमदंष्ट्राकरालं
बिभ्राणो वक्त्रमुग्रभ्रुकुटिपृथुशिराः पिङ्गलश्मश्रुकेशः ।
व्यक्तं नक्तंचरो द्राग्द्रवति ह ह धिक् [1]दैवमस्याङ्गदेशात्
प्रभ्रष्टा वेपमाना पतति तडिदिवाम्भोधरात् मल्लिकेयम्॥39॥

(सबाष्पं)

हा निष्करुणता विधातुः ।

यो सोपानपथादपि प्रियसखीवृन्दैरहम्पूर्विका-
दत्तां हस्तपरम्परामवतरत्यालम्बमाना शनैः ।
सेयं भङ्गुरमध्यमापतति हा तुङ्गान्नभः शृङ्गतो
मत्तैरावण[2]लोलितेव नलिनी मन्दाकिनीपाथसः ॥40॥

यावदेनां धारयामि ।

(खड्गं निधाय प्रसारितोत्तानकर[3]स्तिष्ठति)

(ततः प्रविशति मारुतहस्तगता वेपमानाङ्गी मल्लिका)

**मल्लिका** - हा पडिअह्मि ! [हा पातिताऽस्मि !]

**मारुतः** - (सबाष्पं)

महाभागे, मा भैषीः ।

चेतः समुच्छ्वसतु शाम्यतु वेपथुस्ते
नातः परं निशिचराद्भयमन्यतो वा ।

---

1. दैवमास्वाङ्गः, $मु_1$ 2. ऐरावत °, $मु_1$ 3. add तल °, $मु_2$, $त_2$, $के_1$

नन्वस्य मे परिजनस्य वराङ्गि हस्त-
पर्यङ्कदेशमकुतोभयमागतासि ॥41॥

**मल्लिका** - (सहसा विलोक्य)

अह्महे महाभाओ ! हा महाभाअ

[अहो महाभागः ! हा महाभाग !]

(इति कण्ठमालिङ्गति ।)

**मारुतः** - महाभागे ! किमेतत् ?

**मल्लिका** - (सुचिरं निश्वस्य सलज्जं)

महाभाअ ! आआसवाणी पमाणादो दुल्लहं महाभाअचलणसिस्सूसणं मण्णन्ती अज्ज णिसीहे णोमालिअं वि वञ्चिऊण मरणकिअणिच्चआ भवणुज्जाणं गएव्व तक्खणागएण . . . .

(सभयं)

केण वि रक्खसेण झत्ति घेत्तूण गअणमग्गेण आगदुअ अज्ज तुह हत्थे पाडिदह्मि ।

[(सुचिरं निश्वस्य सलज्जं) महाभाग, आकाशवाणी प्रमाणदुर्लभं महाभागचरणशुश्रूषणं मन्यमाना अद्य निशीथे नवमालिकामपि वञ्चयित्वा मरणकृतनिश्चया भवनोद्यानं गतैव तत्क्षणागतेन केनापि राक्षसेन झडिति गृहीत्वा गगनमार्गेण आगत्य अद्य तव हस्ते पातितास्मि ।]

**मारुतः** - (सोच्छ्वासं)

दिष्ट्या बन्धुजनप्रिये मम कृते श्लाघ्यानसून् नामुचः
दिष्ट्या ते कुणपाशिना नवसुधाहृद्यं न लुप्तं वपुः ।
दिष्ट्या तस्य करच्युतासि गगनात्तूर्णं पतन्ती पुनः
दिष्ट्या चम्पकमालिकेव दयिते प्राप्तासि वक्षो मम ॥42॥

**मल्लिका** – तुह्मे उण देवदादुईआ कहं एत्थ सण्णिहिदा ।
[यूयं पुनर्देवताद्वितीयाः कथमत्र सन्निहिताः !]

**मारुतः** –

सोहञ्च सुन्दरि शिरः कमलार्चनेन
त्वामेव लब्धुमभिराद्धुमना भवानीम् ।
कण्ठे (हस्तेन प्रदर्शयन् )
तमेनमधिषि[1] स्वकरेण खड्गं

**मल्लिका** – (ससंभ्रमं)
महाभाअ, मा मा साहसमणुचिट्ठेहि !
[महाभाग, मा मा साहसमनुतिष्ठ !]
(इति हस्तं रुणद्धि)

**मारुतः** – (सस्मितं)
आक्रन्दितेन तव भीरु, निवारितोऽस्मि ॥43॥

**मल्लिका** – (स्वगतं)
हन्त, अदीदो उत्तन्दो एव्वं वण्णिदो ।
(सकरुणानुरागं)
अम्मह, मह किदे पाणपरिच्छाए वि विवसिदो महाभाओ ।

---

1. अधिष्टि, $त_2$

[(स्वगतं) हन्त, अतीतो वृत्तान्तो एवं वर्णितः।

(सकरुणानुरागं) अहो मम कृते प्राण-परित्यागेऽपि व्यवसितो महाभागः ।]

(नेपथ्ये)

आः, को नाम [1]गतायुर्मदुत्सङ्गवर्तिनीमचूचुरत् मनुजकन्याम्। अद्य सा न दृश्यते एवाङ्गदेशे यामहमेकोत्पाते सिंहलद्वीपं नेतुकामोऽस्मि।

(उभावाकर्णयतः)

**मारुतः** – (विहस्य)

हन्त, देवीप्रभावेण मत्करपतितां नाज्ञासीदेव मूर्खो राक्षसः।

**मल्लिका** – (सभयं)

हत्थि पुणो वि णिवट्टिअ रक्खसो ।

[हन्त पुनरपि निवर्तते राक्षसः ।]

(वेपते)

**मारुतः** – (विहस्य)

महाभागे, मा भैषीः । क्षणमत्र पादपान्तरिता तिष्ठ । तदहमेनं निहन्मि दुष्टराक्षसम् ।

**मल्लिका** – कहं महाकाएण रक्खसेण सङ्गच्छइ णाहो ?

[कथं महाकायेन राक्षसेन सङ्गच्छते नाथः ?]

---

1. नृपशुः, मु,

**मारुतः** – (विहस्य)

भीरु किं महाकाय इति ?

तीव्रोष्णदुर्विषवीर्यभृतः परेषां
तेजस्विनो न गणयन्ति वपुर्महत्वम् ।
यत्पद्मरागशकलाकृतिरद्रितुङ्गं
कात्स्न्र्येन भस्मयति काष्ठचयं स्फुलिङ्गः ॥44॥

(मल्लिका सभयं[1] पादपान्तरिता तिष्ठति। मारुतः खड्गमुद्धृत्य सावष्ठम्भमास्ते । ततः प्रविशति गवेषणं नाटयन् ससंभ्रमो राक्षसः ।)

**राक्षसः**–

सोहं[2] सिंहलदेशकाननपतिर्यस्याक्रतो नामतः[3]
मृत्युः कम्पितकूटशाल्मलिरपि स्थातुं न च क्षम्यते[4]।
तस्यैवाद्रितटस्थितस्य विकटग्रीवस्य रक्षः पते-
रङ्कस्थां मम कन्यकामपहरन् किं नो गतायुर्नरः ॥45॥

**मल्लिका** – (सभयं)

अह्महे एदेण भअङ्करसरीरेण कहं णु कुवलअ-दलकोंमलस्स महाभाअस्स सङ्गामो होइ ।

[अहो एतेन भयङ्करशरीरेण कथन्नु कुवलय-दलकोमलस्य महाभागस्य सङ्ग्रामो[5] भवति !]

**मारुतः** – (सविस्मयं)

अहो एतस्य वपुः प्रकर्षः !

---

1. सभया, मु$_1$ 2. योहं, त$_1$, म$_2$, के$_1$, अ$_1$ 3. नर्दतो, मु$_2$, त$_2$, अ$_1$
4. शंशक्ष्यते, मु$_2$, त$_2$ 5. समरो, मु$_2$

उद्ग्रीवैः परमीक्षितव्यमचलाभोगं शिरोभ्रंकषं
विन्ध्यप्रस्थविशालभीषणमुरस्तालोपमानौ भुजौ ।
भूयः कम्पितभूतलश्च चरणन्यासस्तदेतद्वपुः
सर्गे प्राक्परमाणुतां गमितवान् मन्ये विधिः पर्वतान् ॥46॥

(उच्चैः)

रे रे अमङ्गलस्पर्श !

कल्याणिनीं किसलयादपि कोमलाङ्गीं
शृङ्गारसागरसुधां स्मरजीवनाडीम् ।
तामिन्दुबिम्बवदनां स्पृशतः कथं ते
क्रव्यादपाशशतधानपफालमूर्द्धा ॥ 47 ॥

**राक्षसः** - (मारुतं विलोक्य)

सत्यमयमेव चोरः ।

(सोपहासं)

साधु रे परिस्पन्द, साधु ।

कस्त्वं करालविषभीषणकालसर्प-
स्फारस्फटाफलकरत्नशिलाविशिष्टाम् ।
तां कन्यकामहह सस्मयमस्मदङ्ग-
पर्यङ्कमध्यविधृ[1]तामहृथा विशङ्कम् ॥48॥

**मारुतः** - (सक्रोधं)

आः लोकविद्धिष्टाचर ! कन्यकाचोर ! भूयः

---

1. विभृतां, म[1] 2. भूयः कन्यकागोचर एव, त[2], म[1]

(सावधीरणं)

रे रे पापमते प्रतीच्छसि कथं बालं पलाशाधम
श्वेवाज्याहुतिमाशु धाव चपल त्वं चेत्तवासि प्रियः ।
नोचेदेष करोमि खड्गदलितत्वत्कन्धरान्तः शिरा-
[1]नालष्टच्यूतकवोष्ण[2]रक्तलहरीमेदस्विनीं मेदिनीम् ॥49॥

**राक्षसः** – (सभ्रूभङ्गं)

आः ममापि विकटग्रीवस्य पुरतस्तिष्ठन्
मुक्ताशङ्को[3] विकत्थते च ।

(निर्वर्ण्य, सप्रत्यभिज्ञं, स्वगतं)

अयमेष[4] मद्दुकूलाञ्चललिखितस्तरुणः । यश्चित्र-
कन्याचोर इति खड्गजिह्वेनोपदिष्टः ।

(प्रकाशं)

मूढ स्वजीवनिरपेक्ष मनुष्यडिम्भ
दिष्ट्याऽऽगतस्त्वमिह तिष्ठतु नाम कन्या ।
त्वामेव कोमलकलेवरमाम्रपेषं
पिष्ट्वा पिबामि मधुरं रुधिरं यथेष्ठम् ॥50॥

(इति मारुतं स्कन्धे उद्धृत्य धारयति [5]। )

**मल्लिका** –(सत्वरं पादपान्तरान्निर्गम्य साक्रन्दं)

भद्द रक्खस ! एषा तुह अञ्जली । मुञ्च महाभाअं ।
मं उण भक्खेहि ।

---

1. नालानीत, $म_2$ 2. कठोररक्त, $त_2$ 3. मुक्तशङ्को, $मु_1$

4. एव, $मु_2$ 5. धावति, $त_2$, $अ_1$

[भद्र राक्षस, एषा तवाञ्जलिः। मुञ्च महाभागम्। मां पुनर्भक्षय।]

(राक्षसः अनाकर्णितकेन निष्क्रान्तः)

**मल्लिका** – (सबाष्पं)

हन्त, णीदो एव्व रक्खसेण महाभाओ।

(सकरुणं)

हा सअललोअलोअणचंद! हा कन्दप्पमणोहरङ्ग! हा सज्ज[1]णचूडामणे! [2]हा लच्छीविहारभवण[3]! हा मल्लिआ हिअअवल्लह! मारुअ! कहं णु दे सव्वलक्खण लक्खिओ तारिसो विग्गहो रक्खसाहारो दासि। हत्थि! अहं एत्थ पापा मन्द भाइणी देवदुव्विहास[4]सव्वस्स अणत्थस्स पुणो पुणो कारणह्मि।

(निश्वस्य)

णिप्फलजणणाए[5] मरणं वि दुल्लहं एव्व आसी। अम्ब भअवई विण्णम्भरे देहि मे विवरम्।

(दिशो विलोक्य)

हन्त कालञ्जणणीलणिरुद्धे भुवणे कहं गच्छह्मि? कं सरणं अक्कन्दामि ?

(इति रोदिति)

[(सबाष्पं)हन्त नीत एव राक्षसेन महाभागः।

---

1.सुअण [सुजन], मु₂, त₂ 2. add हा पुण्डरीअलोअण, म₂,[हा पुण्डरीकलोचन!] मु₂, त₂ 3.°राभरण, त₂; मन्दिर, मु₁ 4.om.°वदुव्विहा, मु₁ 5. जीवणाए, मु₂ [जीवनायाः]

(सकरुणं) हा सकललोकलोचनचन्द्र, हा कन्दर्प-मनोहराङ्ग ! हा सज्जनचूडामणे ! हा लक्ष्मीविहारभवन ! हा मल्लिकाहृदयवल्लभ ! मारुत ! कथन्नु ते सर्वलक्षण लक्षितस्तादृशो विग्रहो राक्षसाहारो आसीत्। हन्त, अहमत्र पापा मन्दभागिनी दैवदुर्विधस्य सर्वस्यानर्थस्य पुनः पुनः कारणमस्मि । (निःश्वस्य) निष्फल-जननायाः मरणमपि दुर्लभमेवासीत् । अम्ब, भगवति, विश्वम्भरे, देहि मे विवरम् । (दिशो विलोक्य) हन्त ! कालाञ्जननीलतमोनिरुद्धे भुवने कुत्र गच्छामि ? कं शरणमाक्रन्दामि?]

(प्रविश्य ससंभ्रमा मन्दाकिनी)

**मन्दाकिनी** - वत्से, मा भैषीः ।

**मल्लिका**- (विलोक्य, सबाष्पं)

अम्महे भअवई ! भअवइ, परित्ताअसु ! परित्ताअसु !
[अहो भगवती, भगवति, परित्रायस्व ! परित्रायस्व !]

(इति पादयोः पतति ।)

**मन्दाकिनी** - (सकरुणमालिङ्ग्य)

अङ्गायि भीरु, युवयोस्सर[1]सानुबन्धो
ज्ञानात्मकेन नयनेन मयैष[2] सर्वः ।
रक्षांसि यान्तु विलयं विरमन्तु[3] दोषाः ।
दैवं प्रसीदतुतमां शिवमस्तु भूयः ॥ 51 ॥

अपि च, रक्षोहस्तगतो मारुत इति मा स्म करोर्मनसि सन्तापम् ।

---

1.° व्यसन, $मु_2$ 2. स एष, $त_2$, $मु_2$, $म_1$ 3. विविधाश्च, $मु_1$

विख्यातविभ्रमविडम्बितफल्गुनस्य
रक्षांसि नो परिभवे प्रभवेयुरस्य ।
किं जृम्भमाणकिरणस्य तिरस्क्रियायां[1]
बालस्य वासरमणे[2]रलमन्धकाराः ॥ 52 ॥

(नेपथ्ये चटचटध्वनिः ।)

**मन्दाकिनी** - (विलोक्य, सहर्षं)

अज्ञातमारुतपराक्रमे ! पश्य महाभागस्य चण्डिमानम् । एष खलु -

स्कन्धे स्थितोऽस्य गतभीरसिना शितेन
छिन्ते शिरो विरटतः पिशिताशनस्य ।
दम्भोलिकोटिकठिनेन नखाङ्कुशेन
पञ्चाननः करिपतेरिव कुम्भकूटम् ॥ 53 ॥

(मल्लिका सहर्षं सभयं च पश्यति ।)

**मन्दाकिनी** - (सानन्दं)

असिहतमस्तकः पतति वेपितभूमितलं
रजनिचरो गिरीन्द्र इव वज्रभिन्नतटः ।

(सविस्मयं)

ह ह ह कबन्धतोऽस्य धृतदिव्यवपुः पुरुषः
प्रचलितभूषणो [3]झटिति कोपि समुत्पतितः ॥54॥

---

1.तिरस्कृतायां, $म_1$ 2. °पदे, $के_1$ 3. $त_1$ omits a leaf from झटिति ।

**मल्लिका**– (सविस्मयानन्दं)

भअवइ, अच्चेरं एदं अदिभीसणादो रक्खसादो दिव्वपुरुसो उट्ठियओत्ति। पेच्छ, पेच्छ। पदक्खिणीकदुअ सविणअकलिअञ्जलिपल्लविअमीलिदेसो पणमइ अ महाभाअम्।

[(सविस्मयानन्दं) भगवति, आश्चर्यमेतत् अति भीषणाद्राक्षसाद्दिव्यपुरुष उत्थित इति। पश्य पश्य। प्रदक्षिणीकृत्य सविनयकलिताञ्जलिपल्लवितमौलिदेशः प्रणमति च महाभागम्।]

**मन्दाकिनी** – (साकूतं)

देवपात्रभूतोऽयं[1] मन्ये कोऽपि पुरुषः[2] शापवशेन राक्षसत्वमापन्न इति।

(नेपथ्ये कलकलः। उभे आकर्णयतः।)

**मल्लिका** – (सभयं)

भअवइ रक्खसभएण मण्णे पुणो वि रक्खसा आअच्छन्तित्ति।

[भगवति, राक्षसभयेन मन्ये पुनरपि राक्षसा आगच्छन्तीति।]

**मन्दाकिनी** – (विलोक्य)

वत्से, एते सबाष्पवदनं तातममात्यविश्वावसुं पुरस्कृत्य त्वदन्वेषिणः परिभ्रमन्तः सत्वरमितस्ततो गृहीतविविधायुधा वीरपुरुषाः।

---

1. om देवपात्रभूतोऽयं, $त_2$ 2. दिव्यपुरुषः, $म_2$, $अ_1$

(पुनर्नेपथ्ये)

हा पुत्रि मल्लिके, नन्विन्द्रनीलालोकादपि तिमिरबुद्ध्या बिभेषि !

**मल्लिका** – (सबाष्पं)

हा तादो अक्कन्दइ[1]। [हा तात आक्रन्दति !]

**मन्दाकिनी** – एहि वत्से, त्वददर्शनशोकविह्वलं तातमाश्वास्य प्राणदानमहोपकारिणं विजयिनं मारुतमपि संभावयावः ।

(इति निष्क्रान्ते)

उद्दण्डं रङ्गनाथः सुतमलभत यं रङ्गदेवी तथाम्बा
त्रैविद्येशो महर्षिर्निरवधिमहिमा यद्धिते जागरूकः ।
तस्य श्रीविक्रमाज्ञाबहुमतिरचिते मल्लिकामारुतेऽस्मि-
न्निर्वृत्तः पञ्चमोभूत्प्रकरणतिलके निष्कलङ्कोऽयमङ्कः[2] ॥

॥ इति पञ्चमोऽङ्कः ॥

*****

---

1. add किं करह्म ! [किं कुर्वः] ! , मु$_2$, मै$_4$
add हा ताद, हा अम्ब त$_2$ ! [हा तात, हा अम्ब ! के$_5$]

2. मु$_1$ omits the whole of the verse-
reads इति पञ्चमोऽङ्कः ।

## ॥ षष्ठोऽङ्कः ॥

(ततः प्रविशति काषायाम्बरयुगलहस्तः पुरुषः ।)

**पुरुषः** – (सहर्षं)

अहो विहसिअ वहप्पइ णअप्पहावल्लहिज्जन्त-मल्लिआ करग्गहण मङ्गलशिलाहणिज्जे णाहसंबरअम्मि महन्तो खु सिणेहबन्धो [1]अमच्चविह्वराअ उत्तस्स रुद्धराअस्य, जेण अज्ज सण्णिहिदविवाहसंभाविअ महाजणणिस्सम्बाह सञ्चारजोग्गो णिजभवणैकदेसो विभज्जिअ दिण्णो । अवि अ अणिच्चन्दं[2] वि तादं[3] विह्वराअं अगणअंतो णिअसोअरीं रमअंतिअं अज्ज कलविङ्गअस्स दाउं पवट्टइ[4] ।

(विहस्य)

सोमसरक्कूलदंसणं आरभिअ महन्तो क्खु अहिलासा अज्जकलविङ्गअस्स रमअंतिअं वि । जेण सविकारेहिं[5] णअणंचलेहिं पुणो पुणो पेच्छइ । सअं एव्व अमग्गो गदुअ किंवि किंवि संल्लवइ पोसेइअ णिअवअणेण वि अप्पणो मिच्छापदाणइ ।

(पुनर्विहस्य)

सा उण विसंविअ परिहरदि एदस्य दंसणम् ।

---

1. om अमच्च, मु$_1$ 2. णिच्चिन्दं, मु$_1$ 3. तंद, मु$_1$
4. add आ, मु$_1$ 5. साहिल्लासेहिं, मु$_1$

(विमृश्य)

जं होदु[1] तं होदु। सव्वहा लहिस्सदि एव्व रमअंतिअं अज्ज कलविङ्कओ वि। जेण अघडिअघरणेक्कशिलाहणिज्जा मन्दाइणी आवज्जीअदि णाहसंबरएण तेहिं तेहिं सक्कारेहिम्। जइ सा मण्णेइ कमलिणीं चन्दणं वि परप्पराणुराअं उब्भावेदि कुमुदिणीं वा चण्डअरेण सङ्घडेइ। पेसिअं[2] महहत्थे णाहेण अभिणवुब्भिस्सन्त केशीअवणं[3] सण्णकोमलं एदं [4]कासाअम्बरजुअलं ताए एव्व दाउम्। ता जावव्विवाहमङ्गलोवअरणव्वापुडं भअवदीं दट्ठुं एदं बाहिरमणि[5]गोपुरणद्धकंचण· सालभञ्जिआ [6]पुञ्जप्पभाघडिआविज्जुल्लअविच्छड्डं [7] अमच्चवीसवसुमन्दिरं पविसामि।

(प्रवेशं नाटयित्वा पुरतो विलोक्य)

एसा रमअंतिआए पिअसही महुअरिआ इदो एव्व भवणादो आअच्छइ।

[(सहर्षं) अहो! विहसितबृहस्पतिनय-प्रभावलभ्यमान[8]मल्लिकाकरग्रहणमङ्गलश्लाघनीये नाथशम्बरके महान् खलु स्नेहबन्धोऽमात्य-

---

1. होदि, $मु_1$ [भवति] 2. दिण्णं, अ, $मु_1$ [दत्तं] 3. कोअणदपण्णवण्ण, $मु_1$ [कोकनदपर्णवर्ण ] 4. कसा °, $मु_1$ 5. om बाहिरमणि °, $मु_1$ 6. ध्वजदिडमण्डल ° $म_1$, $मु_2$ [ध्वजदण्डमण्डल ° $मु_2$] 7. विज्जुला विच्छडुं, $मु_2$ ; $म_1$, $त_2$ ;° पिच्छिलं, $मु_1$ 8. लघूक्रियमाण, $मु_2$

विषणुरातपुत्रस्य रुद्ररातस्य । येनाद्य सन्निहित-विवाहसंभावितमहाजननिःसम्बाधसञ्चारयोग्यो निजभव-नैकदेशो विभज्य दत्तः । अपि च अनिच्छन्तमपि तातं विष्णु-रातं अगणयन्निजसोदरीं रमयन्तिकां आर्यकलविङ्काय दातुं प्रवर्तते । (विहस्य) सोमसरः कूलदर्शनमारभ्य[1] महान्खल्वभिलाषः आर्यकलविङ्कस्य रमयन्तिकां प्रति । येन सविकारैर्नयनाञ्चलैः पुनः पुनः प्रेक्ष्यते[2] । स्वयमेव अग्रे गत्वा किमपि संल्लपति घोषयति च निजवचनेनैवात्मनो मिथ्यापदानानि ।

(पुनर्विहस्य)

सा पुनर्विषमिव परिहरत्येतस्य दर्शनमपि । (विमृश्य) यद्भवतु तद्भवतु । सर्वथा लप्स्यत एव रमयन्तिका-मार्यकलविङ्कोऽपि । येनाघटितघटनैकश्लाघनीया मन्दाकिनी आवर्ज्यते नाथशम्बरकेण तैस्तैः सत्कारैः । यदि सा मन्यते, कमलिनीचन्द्रयोरपि परस्परानुरागमुद्भावयति । कुमुदिनीं वा चण्डकरेण सङ्घटयति । प्रेषितं च मम हस्ते नाथेन अभिनवोन्मिषत्किंशुकवर्णं श्लक्ष्णकोमलं एतत्काषयाम्बरयुगलं तस्या एव दातुम् । तस्माद्यावद्वि-वाहमङ्गलोपकरणव्यापृतो भगवतीं द्रष्टुं एतत् [3]बहिर्मणि-गोपुरोन्नद्धकाञ्चनसालभञ्जिकापुञ्जप्रभाघटितविद्युल्लता-विच्छन्दं अमात्यविश्वावसुमन्दिरं प्रविशामि ।(प्रवेशं नाटयित्वा, पुरतो विलोक्य) एषा रमयन्तिकायाः प्रियसखी मधुकरिका इत एव भवनादागच्छति ।

1. ° दर्शनादारभ्य, के$_4$, के$_5$ 2. पश्यति, मु$_2$, के$_{3-5}$
3. बाह्य, के$_3$, के$_5$

(प्रविश्य)

**मधुकरिका** – (सानन्दं, स्वगतं)

साहु अविगीओ संबरअवञ्चणोवाओ दिट्ठो अणि-हरसाहारणमहप्पहावाए भअवईए मन्दाइणीए[1] ।

(निःश्वस्य, सनिर्वेदं)

हन्त सहजो कोवि सत्तू एव्व रुद्दराओ पिअसहीए रमअंतिआए जो मालिअं विअ मक्कडअस्स णं कलविङ्कअस्स दाउं पवट्टइ[2] ।

(सोच्छ्वासं)

एदं वि उवदिट्ठो एव्व मह कण्णे पिअसहीए विअ जाणिदव्वोवाओ भअवईए[3] ।

(पुरुषं विलोक्य)

अज्ज एक्कघरवासपरिअएण जाणीअदि संबरअस्स परिअणो चवलओ णाम एसो ।

[(सानन्दं स्वगतं) साधु अवगीतशम्बरक-वञ्चनोपायो दृष्टोऽनितरसाधारणमति[4]प्रभावया भगवत्या मन्दाकिन्या। (निःश्वस्य, सनिर्वेदं) हन्त,

---

1. मन्दाअणीए, मु$_1$
2. संघडअइ, मु$_1$
3. भअवदीए, मु$_1$
4. महा, अ$_2$

सहजः कोऽपि शत्रुरेव रुद्ररातः प्रियसख्याः रमयन्तिकायाः, यो मालिकामिव मर्कटकाय कलविङ्कात दातुं प्रवर्तते । (सोच्छ्वासं) एतदपि उपदिष्ट एव मम कर्णे प्रियसख्या इव ज्ञातव्य[1] उपायो भगवत्या । (पुरुषं विलोक्य) अद्य एकगृहवासपरिचयेन ज्ञायते शम्बरकस्य परिजनो चपलको नाम एषः ।]

**पुरुषः** – (उपसृज्य)

महुअरिए, अवि जाणीअदि कहिं भअवदी मन्दाइणी वट्टइत्ति ?

[मधुकरिके, अपि ज्ञायते कुत्र भगवती मन्दाकिनी वर्तत इति ?]

**मधुकरिका** – (स्वगतं)

कीस एसो भअवदिं अण्णेसइ? होदु । पुच्छिस्सं दाव ।

(प्रकाशं)

चवलअ, कीस भअवई ?

[(स्वगतं) कस्मादेष भगवतीमन्वेषते? भवतु । पृच्छामि[2] तावत् । (प्रकाशं) चपलक, कस्मात् भगवती ?]

**चपलकः** – मुद्धे, सा खु अणुल्लङ्घणिज्जं आआरभासिअं पडिवालअंती णाअसंभरअस्स सव्ववीसम्बद्धाणं वट्टइ ।

1. प्रियसख्यापि अविज्ञातव्यः के$_4$, प्रियसख्यापि अज्ञातव्यः, के$_5$

2. प्रक्ष्यामि, के$_5$

[मुग्धे, साखल्वनुल्लङ्घनीयं आकाशभाषितं प्रतिपालयन्ती नाथशम्बरकस्य सर्वविस्रम्भस्थानं वर्तते ।][1]

**मधुकरिका** –(स्वगतं)

भअवइ, णमो तुह्माणं वञ्चणप्पहावस्स ।

[भगवति, नमो युष्माकं वञ्चनप्रभावाय ।]

**चपलकः** – (स्वगतं)

कहइस्सं रमअंतिआ उत्तंदम् ।

(प्रकाशं)

अज्ज विसेसदो दट्टव्वा जं रमअंतिआ अणुऊलइदव्वा । सा खु अग्गएण रुद्दराएणदिण्णा वि वामसीला णाणुमण्णइ कलविङ्कअस्स परिणअम् ।

[(स्वगतं)कथयिष्यामि रमयन्तिकाया[2] वृत्तान्तम् । (प्रकाशं) अद्य विशेषतो द्रष्टव्या यद्रमयन्तिका अनुकूलयितव्या साखल्वग्रजेन रुद्ररातेन दत्तापि वामशीला नानुमन्यते कलविङ्ककस्य परिणयम् ।]

**मधुकरिका** – (सोपहासं, स्वगतं)

---

1. **चपलकः** (विहस्य) णं एसा इमस्स किए मुग्धेन्दुसेहरविलासिणीए समुल्लसिअं आआसभासिदं ति णाह संबर अस्स सव्ववीसम्भट्ठाणं वट्टइ । $मु_1$ [(विहस्य) नन्वेतस्य कृते मुग्धेन्दुशेखरविलासिन्याः समुल्लसितं आकाशभाषितं इति नाथशम्बरकस्य सर्वविस्रम्भस्थानं वर्तते ।],

2. add अपि, $के_4$, $के_5$

[1]भमरअचरणताडणफल्लो भविस्सदि हदासस्स कलविङ्कअस्स परिणओ ।

(प्रकाशं)

चपलअ, इसक्करं खु रमअंतिआए अणऊलणं भअवईए[2] ।

[(सोपहासं, स्वगतं) भ्रमरकचरणताडनफलो भविष्यति हताशस्य कलविङ्ककस्य परिश्रमः । (प्रकाशं) चपलक, ईषत्करं खलु रमयन्तिकाया अनुकूलनं भगवत्या ।]

(नेपथ्ये)

नवमालिके, किमिति विलम्ब्यते ? भगवत्यादेश[3] को नाम समयः सुरभिमारुतागमनसुभगं लीलोद्यानं प्रविष्टायाः त्वदागमनं प्रतिपालयन्त्या मल्लिकायाः । तद्याहि विविक्ते सविशेषं मण्ड्यतां अद्य विवाहो-चितैर्माङ्गलिकैर्भूषणैः । यावन्न परापतति सम्बन्धिवर्गः ।

(उभावाकर्णयतः ।)

मधुकारिका - (स्वगतं)

जुज्जइ मारुओ वि तहिं चिअ कलकण्ठब्भमरअ-सहाओ सारसिआए णिऊढं आणिओ वट्टि, ता अहं वि उदइ संविहाणे पवट्टामि ।

---

1. अज्जअं, मु$_1$; अज्ज अ, म$_1$ 2. भअवदीए, मु$_1$

3. आदिशति, मु$_2$, त$_1$, के$_2$

(प्रकाशं)

चपलअ, एदे कञ्चुइणो भअवईए आदेसं ववहरन्ति। ता गच्छ। समीवट्ठिआ सुलहदंसणा एव्व भअवदी।

[(स्वगतं युज्यते। मारुतोऽपि तत्रैव कलकण्ठ-भ्रमरकसहायः सारसिकया निगूढमानीतो वर्तते। तस्मादहमप्युचिते संविधाने प्रवर्ते। (प्रकाशं) चपलक, एते कञ्चुकिनो भगवत्या आदेशं व्यवहरन्ति। तस्माद्गच्छ। समीपस्थिता सुलभदर्शनैव भगवती।]

(इति निष्क्रान्तौ)

(प्रवेशकः)

(ततः प्रविशति मारुतः कलकण्ठो भ्रमरकश्च)

**मारुतः**- भ्रमरक, अपि सत्यं उपकण्ठ-वर्तिलतामण्डपमध्यास्ते मल्लिका ?

**भ्रमरकः** - णाह, णं भणामि कालिन्दी णोमलिआहिं पारद्धमङ्गलमण्डणविहि दिट्ठत्ति[1]।

[नाथ ननु भणामि कालिन्दीनवमालिकाभ्यां प्रारब्धमङ्गलमण्डनविधिः दृष्ट इति ।

**मारुतः** - (सोच्छ्वासं)

आशंसाभिरहर्दिवं ह्यधिरुजा[2] यल्लिप्सितं प्राज्ञया
नैराश्यं यदलाभकातरधिया प्राणेष्वपि प्रस्तुतम् ।

---

1. चिट्ठत्ति, $मु_1$

2. रहस्यमन्मथरुजा, $मु_2$, $म_2$, $अ_1$, $के_2$; असह्यमन्मथरुजा, $म_1$

हस्तप्राप्तमिवाद्य जीवितफलं तद्भाति न ज्ञायते[1]
मातस्त्वं भवितव्यते कथमिव प्रादुर्भवित्री पुनः ॥ 1 ॥

**कलकण्ठः** – मा मा सन्दिहीष्ठाः[2]। ननु ते हस्तप्राप्तमेव जीवितफलं भवान्याः प्रसादतः । यतः स्वकण्ठच्छेदसाहसनिःशङ्कप्रवृत्त एव हस्ते पातिता मल्लिका ।

**भ्रमरकः** – णाह, एसो लदावलयन्तरेण लआमण्डवमग्गो[3] ।
[नाथ, एष लतावलयान्तरेण[4] लतामण्डपमार्गः ।]

**मारुतः** – भ्रमरक, नीरन्ध्रपत्रपटलमांसललतापुञ्ज-निरुद्धेऽपि प्रदेशे परिजनापातशङ्कादुःस्थित-हृदयो न पारयामि प्रचलितुम् ।

**भ्रमरकः** – णाह, भअवईए आदेसेण वेत्तपाणेहिं उज्जाणादो दूरणिरत्थो क्खु परिअणो ।

[नाथ, भगवत्याः आदेशेन वेत्रपाणिभिरुद्यानाद्दूर-निरुद्धः खलु परिजनः ।]

**मारुतः**–(सहर्षं) ननु सर्वत्र अप्रमादिनी भगवत्या नीतिः । तदादेशय मार्गम् ।

**भ्रमरकः** – इदो इदो । [इतः इतः ।]

(सर्वे परिक्रमन्ति)

**कलकण्ठः** – (विलोक्य)

---

1. ज्ञायसे, $मु_1$ 2. संशयिष्ठाः, $म_2$, $त_2$, $मै_3$, $अ_1$

3. वल्लीवलअंतरेण लआमण्डवंमहो, $मै_4$, $म_2$ 4. वल्लीदलान्तरेण °, $मु_2$

अहो सर्वतः प्रत्यासन्नपरिणयमङ्गलपिशुनोदात्त-
परिष्करणममात्यविश्वावसोर्भवनम् । तथा हि-

दत्ता नूतनचित्रपङ्क्तिरमले प्रासादभित्तिस्थले
नद्धा वन्दनमालिकास्तत इतो द्वारेषु माध्वीमुचः ।
किञ्च क्षौमवितानमण्डलकृतप्रालम्बमुक्तावली-
शुम्भत्काञ्चनतायमान[1]सुभगा बाह्याङ्गणक्षोणयः[2] ॥ 2 ॥

अपि च,

आरादावान्त्यलिन्द[3]ध्वजशिखरपटीपल्लवान् लोलयन्तो
वोढारस्तोरणस्रक्कुसुमनवसुधाविप्रुषां गन्धवाहाः ।
कर्षन्तो वल्गुवल्गत्कुचभरमभितः कुङ्कुमोत्कर्षवेगा-
दुद्वेल्लद्दोर्लतानां परिजनसुदृशां कङ्कणक्रेङ्कृतानि ॥3॥

**भ्रमरकः**- (कर्णं दत्वा)

णाह, किं कङ्कणनादो एव्व केवलं कहिदो । एसो इदो तदोपधावन्तवारसुन्दरीणिअम्बबिम्बलम्बिमणिमेहला-सहस्सझङ्कारमुहरो[4] घोलन्तसअलंत्तेउरजणभूषणा-रवणिमज्जन्त[5] मङ्गलमुअङ्गसङ्ककाहलणिणादो[6] सण्णिहिद-महीअभूदेववग्गपरिज्जन्तपुण्णपुण्णाहघोसमङ्गलो गोत्त-जरमण्डलाउत्तपवित्तपव्वईलच्छीपरिणओ [7]णच्चणमङ्गल-सङ्गीअमहुरोद्दामवेसवन्दिबुद्धवड्ढिअ जअसद्दहलब्बोल महन्तोक्खु एसो उच्चवकोलाहलो ।

---

1. ° कायमान, $म_1$, $मु_2$, $त_2$ 2. क्षोभयः, $मु_2$ 3. आरादावांह्यलिन्द, $मु_1$
4.° सीहरो, $मु_2$ 5. णिकुञ्जन्त, $त_2$
6. णिणाद, $म_2$, $त_2$, $अ_1$ 7. पक्काणमङ्गल, $त_2$

[(कर्णं दत्वा) नाथ, किं[1] कङ्कणनाद एव केवलं कथितः । एष इतस्ततः प्रधावद्धारसुन्दरीनितम्ब-बिम्बलम्बिमणिमेखलासहस्रझंकारमुखरः घूर्णमान[2]-सकलान्तःपुरजनभूषणारवनिमज्जन्मङ्गलमृदङ्गशङ्ख-काहलनिनादो सन्निहितमहितभूदेववर्गपठ्यमान-पुण्यपुण्याहघोषमांसलः गोत्रजरतीमण्डलारब्धपवित्र-पार्वतीलक्ष्मीपरिणयः [3]नर्तनमङ्गलसङ्गीतमधुरो उद्दामवेष-वन्दिवृन्दवर्धिजयशब्दकोलाहलमेदुरो महान्खल्वेष उत्सवकोलाहलः ।]

**मारुतः** – (निःश्वस्य) सखे कलकण्ठ !

परिणयसमयस्तन्व्या यथा यथा भजति सान्निध्यम् ।
संशयदोलारूढं तथा तथा वेपते[4] हृदयम् ॥ 4 ॥

**भ्रमरकः** – णाह, आअंदह्म लआभवणपेरन्तम् ।

[नाथ, आगतास्मो लताभवनपर्यन्तम् ।]

**मारुतः** – (सहर्षं)

किमिदमेव मल्लिकाधिवाससुभगं लताभवनम् ?

**कलकण्ठः** – ननु श्रूयते प्रसाधनसमयसंभाव्यः क्षणोत्पन्नविरतो भूषणझंकारः ।

---

1. कस्मात् , के$_4$, के$_5$ 2. add शील °, के$_4$
3.° परिणयोपाख्यान, के$_4$, के$_5$ 4. add ऽत्रमे, म$_1$

**भ्रमरकः**:- णाह, एसा मङ्गलह्लाण-विसुद्धमुद्ध-परिक्खामपण्डरङ्गसविरोसलोहणिज्जादंसणा[1] णोमालिआ णिव्वट्टिअ विवाहणेवच्छमहु-रोदाररमणिज्जवेसा एत्थ लअंदरेण उज्जाण-लच्छि विअ सक्खा लक्खिज्जइ तत्तहोदी।

[नाथ, एषा मङ्गलस्नानविशुद्ध-मुग्ध-परिक्षाम पाण्डरङ्गासविशेषलोभनीय-दर्शना नवमालिका निवर्तितविवाहनैपथ्य-मधुरोदाररमणीयवेषा अत्र लतान्तरे उद्यान-लक्ष्मीरिव साक्षाल्लक्ष्यते तत्रभवती।]

**कलकण्ठः** - (पत्रजालान्तरेण विलोक्य)[2] सखे, पश्य पश्य।
इयं सा कल्याणी लुलितमधुरैरवयवैः[3]
किरन्ती[4] लावण्यं किमपि नयनानन्दजननी।
अनल्पैराकल्पैरलसनयनामण्डितवपु-
र्लतानामभ्याशे कुसुमनिचितान्येव लतिका ॥ 5 ॥

**मारुतः** - (सानन्दं विलोक्य)
एषा खल्विह वलितमुखी कालिन्दीनवमालिकाभ्यां किमपि संल्लपति। तदिह लतान्तरेण प्रविश्य गूढं पश्यामः।

(तथा कुर्वन्ति)

---

1. add पसाहणणिउग ° [प्रसाधननिपुण °], मु$_2$
2. मु$_1$ omits the following passage, till लतिका।
3. ललितरमणीयेवायवयवैः, म$_2$
4. लवङ्गी, म$_2$

(ततः प्रविशति यथोद्दिष्टा मल्लिका, नवमालिका, कालिन्दी च ।)

**मल्लिका** - सहिओ तुह्माणं उप्पलम्भवअणेण एव्व अणुमदो मए एसो मण्डणविही ।

[सख्यौ, युवयोः विप्रलम्भवचनेनैवानुमतो मयैष मण्डनविधिः ।]

**नवमालिका** - सहि, मा मा अण्णहा संभावेहि ।

[सखि, मा मा अन्यथा संभावय ।]

(मारुतं विलोक्य, सहर्षं, जनान्तिकं)

कालिन्दि, आअदो एव्व पिट्ठभाए महाभाओ किं पआसइस्सामो । जेन सच्चप्पच्चओ होइ पिअसहीए ।

[कालिन्दि, आगत एव पृष्टभागे महाभागः । किं प्रकाशयिष्यावः येन सत्यप्रत्ययो भवति प्रियसख्याः ।]

**कालिन्दी** - (जनान्तिकं)

सहि मा मा पआसेहि । समए एव्व पआसणिज्जो ।

[सखि, मा मा प्रकाशय । समये एव प्रकाशनीयः ।]

**नवमालिका** – (स्मित्वा)

सहि मल्लिए, णं तुएवि अह्मे विप्पलद्धह्म ।

[(स्मित्वा)सखि मल्लिके, ननु त्वया तु आवां विप्रलब्धे स्वः ।]

**मल्लिका** – (सानुतापं) कदा ? [कदा ?]

**नवमालिका** – णं रत्तिअं अह्मेवि वञ्चिअ पाणपरिच्चाए पवुत्तासि !

[ननु रात्रौ अस्मानपि वञ्चयित्वा प्राणपरित्यागे प्रवृत्तासि !]

(मल्लिका लज्जते)

**कलिन्दी** – दिट्ठआ तक्खणसादिअ रक्खसेण घेत्तूणमहाभाअस्स हत्थे पाडिआसि ।

[दिष्टया तत्क्षणासादितराक्षसेन गृहीत्वा महाभागस्य हस्ते पातितासि]

**कलकण्ठः** – सखे, यत्रैव पातिता मल्लिका, कथं तत्रैव स्थले सन्निहितोऽसि ?

**मारुतः** – अहं खलु अन्तरुपवनं [1]प्रविविक्षुः चरणस्खलितेन सशङ्कस्तत्रैवातिष्ठम् ।

**मल्लिका** – कालिन्दि, णाहि सो रक्खसो। अवि दु कोवि दिव्वपुरुषो एव्व। कहिअं भअवईए महाभाअस्स जणणान्तरमित्तं सो त्ति ।

(उभे विस्मयं नाटयतः )

[कालिन्दि, न हि स राक्षसः । अपि तु कोऽपि दिव्यपुरुष एव । कथितं भगवत्या महाभागस्य जननान्तरमित्रं स इति । (उभे विस्मयं नाटयतः)]

**कलकण्ठः** – सखे, क्व गतः स महापुरुषः यस्त्वया जुगुप्सितात् रक्षोजन्मनो विमोचितः ।

**मारुतः** – स खलु मां सुहृत्स्नेहेनाभाष्य, सखे, यदा मां स्मरिष्यसि, तदा सन्निधास्ये, विधास्ये च तवाभिमतमिति वदंस्तिरोऽभूदेव ।

**नवमालिका** – ता तुमं एव्व विप्पलम्भसीला ।

[तस्मात् त्वमेव विप्रलम्भशीला ।]

**मल्लिका** – उइओ उवालम्भो । [उचित उपालम्भः ।]

**नवमालिका** – सहि कहेहिं किंअणुऊलो तुह एसो मण्डणविहि, ण वेति ।

[सखि, कथय किमनुकूलस्तवैष मण्डन-विधिर्नवेति ।]

---

1. om प्र°, $मु_1$, $म_1$, $के_1$

**मल्लिका** – (सलज्जस्मितं)

सहि मह एसो ईरिसोत्ति[1] ण पारेमि[2] लज्जाए पसंसिदुम् । दूरे कखु वअणाणं पिअसहीए पसाहणणेउणी ।

[(सलज्जं) सखि, मम एष ईदृश इति न पारयामि लज्जया प्रशंसितुम्। दूरे खलु वचनानां प्रियसख्याः प्रसाधननैपुणी ।]

**कलकण्ठः** – सम्यगुक्तं मल्लिकया, वचनानां दूर इति । नन्वैकैकं [3]इति वर्णनमतिक्रामति । इदमेव तावत्पश्य–

अस्याः सुगन्धिनवकुङ्कुमपङ्कदत्तो
मुग्धश्चकास्ति तिलको मदिरेक्षणायाः ।

**मारुतः** – (सभिलाषं)
आविष्टरागमभिराममुखारविन्द–
[4]निष्पन्दलग्नमिव मे हृदयं द्वितीयम् ॥ 6 ॥

**कलकण्ठः** – (सस्मितं)
सखे, अपहृतमेव मम वचनम् ।

**भ्रमरकः** – णाह, पेच्छ, पेच्छ । एसा णाहेण दिण्णा, वेढइ हारयट्ठी, कन्धरामूलम्मि तत्तहोदीए ।

---

1. ईरिसो °, म$_1$, त$_2$, मु$_2$ [ईदृशा °] 2. सक्कुणोमि [शक्नोमि, मु$_2$]
3.° एकैक एव, मु$_2$ 4. निष्यन्द, मु$_1$, म$_1$, मै$_{1-2, 4}$, के$_{1-2}$, अ$_1$

[नाथ, पश्य, पश्य। एषा नाथेन दत्ता, वेष्टते हारयष्टिः, कन्धरामूले तत्रभवत्याः ।]

**कलकण्ठः** – (निर्वर्ण्य)

सत्यं सैवेयं वयस्यदोरन्तरविहरद्दुर्ललिता हारवल्ली ।

(विमृश्य)

मुक्तावली स्मरविदाहविपाण्डु मूले
नद्धा चकास्ति जितकम्बुनि कण्ठकाण्डे ।

**मारुतः** –

निश्चिन्वती मृगदृशो वदनं मृगाङ्कं
नक्षत्रपङ्क्तिरिव संपतिता नभस्त : ॥ 7 ॥

**कलकण्ठः** – (सप्रशंसं)

वयस्य ननु सर्वोत्तरस्ते प्रतिभोत्कर्षः ।

**मारुतः** – सखे, सकलप्रतिभादूरमुदारविरचित-मूल[1]-धम्मिल्लगर्भकग्रथितमालतीकुसुमसौरभ्यलुभ्य-दिन्दिन्दिरसुन्दरीमधुरसमारब्धमङ्गलसङ्गीतकं अनर्घ्यताटङ्ककर[2]पल्लवितकोमलकपोलविन्यस्त-पत्रलतासङ्कुलं[3] अतिसुरभिहिमजलशबलकुङ्कुमघन-सारसरसाङ्गरागलुलितघनतुङ्गकुचकुम्भाभोग-प्रेङ्खोलहारं[4] विशालनिबिडनितम्बमण्डलमण्डित-काञ्चनकाञ्चीगुणपद्मरागमयूखपुञ्जमञ्जिष्ठा-रञ्जितमङ्गलक्षौमं आमुक्तमौक्तिकनूपुर किरणकृत्रि-

---

1. °नील, $मु_2$ 2. ° किरण, $त_2$,$के_2$ 3. पत्रलताङ्कुरं, $त_2$,$के_2$
4. हारजालं, $मु_2$, $त_2$, $के_2$

महंसंसेवितचरणपुण्डरीकं अभिराममस्याः विवाह-
नैपथ्यम् ।

(निर्वर्ण्य)

अथवा पुनरुक्तान्येव अनवद्याङ्ग्या मण्डनानि ।

(निःश्वस्य)

नेत्रोपान्तवतंसिते श्रुतिपुटे नीलोत्पलं निष्फलं
हासश्रीपरिकर्मिते स्तनतटे हारोन्वहारः[1] कथम् ।
पिण्डालक्तकपातनं चरणयोः पीडाफलं ताम्रयोः
वामाक्ष्या वपुषि स्वभावसुरभौ व्यर्थानुलेपव्यथा ॥ 8 ॥

**भ्रमरकः** - कहं ण दीसइ चूलापदेसे[2] सिहामणी ।

[कथं न दृश्यते चूडाप्रदेशे शिखामणिः ।]

**नवमालिका** - सहि,इमस्सिं रअणमउरे पेच्छ तुह अवअव-लच्छीमण्डिअं मङ्गलमण्डणम् ।

[सखि, अस्मिन् रत्नमुकुरे पश्य तवावयव-लक्ष्मीमण्डितं मङ्गलमण्डनम् ।]

(इति दर्पणमग्रे दर्शयति। मल्लिका सलज्जं पश्यति।)

**मारुतः** - सखे, पश्य ।
एतावति त्रिभुवने नवयौवनोद्य-
दुद्दामरूपमहिलाजनमण्डितेपि ।

---

1. °न भारा, $मु_2$, $के_2$ 2. add . स, $मु_2$

नास्त्येव विभ्रमनिधेरुपमानमस्या
यद्यस्ति रत्नमुकुरे प्रतिबिम्ब एषः ॥ 9 ॥

**नवमालिका** – सहि पेच्छ पेच्छ। णिसग्गासिणिद्धणीललोअ-णुप्पलसोहादुल्लक्खविसेसकज्जललेहंसिणिद्ध महुरधवल[1] गण्डमूलप्पान्तपल्लत्थकत्थुरिआपत्तलआविभावि-असोहादिसमअं मणहरकुङ्कुमदिलअलञ्चिअरमणिज्जललाड[2]-देसप्पडिबिम्बिअ गोरीचरणलग्गलक्खारुणशङ्कर[3]शिर-च्चन्दलेहं[4] उदारसीमन्तपहादिण्णसुन्दरसिन्दूर-कन्दलिअकन्दप्पआवङ्कुरं सअलजणलोअणाणंद-चन्दमण्डलं पडिबिम्बइ तुह वअणाम्बुअम् ।

[सखि, पश्य पश्य । निसर्गस्निग्धनीललोच-नोत्पलशोका दुर्लक्ष्य[5]विशेषकज्जललेखं स्निग्धमधुर धवलगण्डमूलप्रान्तपर्यन्तकस्तूरिकापत्रलताविभावित-शोभातिशयं मनोहरकुङ्कुमतिलकलाञ्चितरमणीयललाट-देशप्रतिबिम्बितगौरीचरणलग्नलाक्षारुणशङ्करशिरश्चन्द्र-लेखं उदारसीमन्तपथदत्तसुन्दरसिन्दूरकन्दलित-कन्दर्पप्रतापाङ्कुरं सकलजनलोचनानन्दचन्द्रमण्डलं प्रतिबिम्बते तव वदनाम्बुजम् ।]

**मल्लिका** – णोमालिए कीस सिहामणिणा ण भूसिदह्मि ?
[नवमालिके, कस्मात् शिखामणिना न भूषिताऽस्मि ?]

---

1. add दुव्वल, $मु_1$ 2. मणोज्जणिडाल, $मु_1$ 3. मेल °, $म_1$
4. चन्दलेहासोहं, $मु_1$ 5. दुर्लक्ष °, $मु_2$

**नवमालिका** – सहि, किं विसुमरिदं ? णं तुए एव्व कहिअं रक्खसादो णिपडन्तीए पुणो वि पब्भट्टो सोत्ति ।

[सखि, किं विस्मृतम् ? ननु त्वयैव कथितं राक्षसान्निपतन्त्या पुनरपि प्रभ्रष्टस्स इति !]

**मारुतः** – हन्त शिखामणे किं पुनरपि पतितोऽसि, पश्य दौर्भाग्यम् !

दिष्ट्या कथञ्चिदस्या प्राप्तवतस्ते पुनः[1] सङ्गम् ।
[2]सुलभो भवति वियोगो भूयो भूयो ममेव मणे ॥10॥

(नेपथ्ये)

त्वर्यतां त्वर्यतां, निवर्त्यतां मण्डनविधिः ।

(सर्वे आकर्णयन्ति)

**कालिन्दी** – सहि भअवई तुवरावेइ । ता गच्छह्म । अणुभवणिज्जो तुए एसो विवाहमङ्गलारम्भो ।

[सखि, भगवती त्वरयति । तस्माद्गच्छामः । अनुभवनीयस्त्वयैव विवाहमङ्गलारम्भः ।

**मल्लिका** – (सविषादं निःश्वस्य, स्वगतं)

हद्धि, पअरिअह्मि[3] महजीविअरक्खणमेत्तोपउत्त-वअणाहिं पिअसहीहिम् । हन्त णिक्कलुणारम्भणिण्डु-

---

1. add पुनः, $म_2$, $त_2$, $मै_1$, $मै_2$, $मै_3$, $के_2$
2. $मु_1$ omits the following dialogues till वअणेण, fn, 1. P. 241
3. पदारिदह्मि, $म_1$

लगअणवाणीदुव्विबाअमुसिअजम्मफला, मन्दभाइणी[1] अज्ज किं करोति? कीस तह भीसणेण रक्खसेण तक्खणं चिअ ण भक्खिअंहि । कीस वा णिब्भअ तह णिरालम्भाओ गअणाओ णिवडंती तिलसो तिलसो ण विसिण्णह्मि?

(स्मृत्वा[2], पुनर्निश्वस्य)

किं वा पडिवज्जइ महकए तह कण्ठदेसणिहित्थ-करालकरवालो जीविअ परिच्छाअ ववसिओ सो महाभाओ ।

[सविषादं, निश्वस्य, स्वगतं) हन्त, प्रतारिताऽस्मि मम जीवितरक्षणमात्रोपयुक्तवचनाभिः प्रियसखीभिः । हन्त, निष्करुणारम्भनिष्ठुरगगनवाणीदुर्विपाकमुषितजन्मफला मन्दभागिनी अद्य किं करोमि ? कस्मात् तथा भीषणेन राक्षसेन तत्क्षणमेव न भक्षितास्मि ? कस्माद्वा [3]निर्भाग्या तथा निरालम्बाद्गगनान्निपतन्ती तिलशस्तिलशो न विशीर्णाऽस्मि ? (स्मृत्वा, पुनर्निःश्वस्य) किं वा प्रतिपद्यते मम कृते तथा कण्ठदेशनिहितकरालकरवालो जीवित-परित्यागव्यवसितः स महाभागः ।]

**नवमालिका** - (जनान्तिकं)

सहि, कालिन्दि, दिढं खु विसूरदि अमुणिदपरमट्टा अह्माणं एदिणा कीलिदेण ।

(प्रकाशं)

---

1.om from हन्त to **मन्दभाइणी**, **मु**$_2$ 2. om **स्मृत्वा**, **के**$_2$

3. निर्भागा, मु$_2$, के$_3$

भट्टिदारिए, कीस अभणिदुत्तरात्तुमिं चिट्ठसि ? कीस दे सोरिअ तम्बाहर पल्लवा तरलीकदधणंसुआ पसप्पन्दी दीहरुह्मलणिस्सासमारुदा। कीस वा दूसिदकओलपत्तलेहा विलुलिदंजणबिन्दुणो णीसरन्ति बाहत्थे वा ।

[(जनान्तिकं) सखि, कालिन्दि, दृढं खलु खिद्यते अज्ञातपरमार्था अस्माकमेतेन क्रीडितेन । (प्रकाशं) भर्तृदारिके, कस्मात् अभणितोत्तरा तूष्णीं तिष्ठसि ? कस्मात् ते शोषितताम्राधरपल्लवाः तरलीकृतस्तनांशुकाः प्रसर्पन्ति दीर्घोष्मलनिश्वासपवनाः । कस्माद्वा दूषित-कपोलपत्रलेखाः विलुलिताञ्जनबिन्दवः निस्सरन्ति बाष्पस्तबकाः ।]

**मल्लिका** – (निःश्वस्य)

सहि णोमालिए । कीस मं अजाणन्ती विअ मणीरहसहस्ससंपड्ढिअ अट्ठ दूरविहडणणिट्ठुलावग्गह-कअंतकवलिअं तुमं विआआसेसि ।

(सनिर्वेदं)

जुत्तं णि मज्जीविअ णिव्विसेसाणं पिअसहीणम्, जं एत्तिअं समअं तेण तेण विप्पलम्भवअणेण पआरिअ, अज्ज उण अइजुउच्छिए कुम्भीपाए मं पाएउं पवट्टेह ।

(निश्वस्य) सखि नवमालिके, कस्मात् मां अजानन्तीव मनोरथसहस्रसंवार्धितार्थदूरविघटननिष्ठुराव-ग्रहकृतान्तकबलितां त्वमप्यायासयसि । (सनिर्वेदं) युक्तमिदं मज्जीवितनिर्विशेषाणां प्रियसखीनाम्, यदेतावन्तं समयं तेन तेन विप्रलम्भवचनेन प्रतार्य, अद्य पुनरतिजुगुप्सिते कुम्भीपाके मां पातयितुं प्रवर्तध्वम् ।

**कलकण्ठः** – वयस्य, पश्य ते सौभाग्यम् ।

एषा तावत्सहृदयसखीवाक्यविस्रम्भलब्ध-
त्वत्सङ्काशानुमतपरमोदारनैपथ्यलक्ष्मीः ।
अद्य श्रुत्वा परपरिणयं दूयते बाष्पकण्ठी
मेघध्यानोच्चकितहृदया बालहंसीव मुग्धा ॥ 11 ॥

**नवमालिका** – (सकरुणं, जनान्तिकं)
कालिन्दि, सुणु भट्टिदारिआए हिअअ भरिज्जन्तमण्णुवसविसंठुलं व अणम् ।
[कालिन्दि, शृणु भर्तृदारिकायाः हृदय-भरितमन्युवशविसंष्ठुलं वचनम् ।]
(संस्कृतमाश्रित्य)

अनुकूलविप्रलम्भैरस्माभिः खेदिता सखी वदति ।
सस्नेहं सविषादं सोपालम्भं सधिक्कारम् ॥ 12 ॥

(प्रकाशं)

सहि मा कुप्प अह्माणं एदेण विप्पलम्भवअणेण[1] । ता पसीद ।

(मारुतं कटाक्षेण दृष्ट्वा)

एदस्य तुइ[2] बद्धाणुराअस्स संबरअस्स देहि करअमलम् । आणंदेहि बन्धुवग्गम् ।

---

1. मु$_1$ **omits till** वअणेण, **from fn. 2; p. 238**

2. **add** सविसेसं, मु$_2$, म$_1$, अ$_1$ [सविशेषं]

[(प्रकाशं) सखि मा कुप्य अस्माकं, एतेन विप्रलम्भ-वचनेन । तस्मात्प्रसीद । (मारुतं कटाक्षेण दृष्ट्वा) एतस्य त्वयि बद्धानुरागस्य शम्बरकरस्य देहि करकमलम् । अनन्दय बन्धुवर्गम् ।]

**मल्लिका** – (सान्तर्मन्युभारं)

सहिओ, तरुणसिहण्डिपिच्छसिणिद्धसामल-कोमलस्स[1] महाभाअस्स मारुअस्स दंसणादो पहुदि जं अण्णो पुरुसो ममाइ हिअएणवि चिन्तिओ, तेणेव्व सच्चेण सपामि इदो वरं वि णाहं अण्णं पेक्खिस्सं महाभाअपुण्णलाअणसुहावारिहिप्पवाह विगाह पवित्तेहिं णेत्तेहिम्[2] ।

[सख्यौ, तरुणशिखण्डिपिच्छस्निग्धश्यामलकोमलस्य महाभागस्य मारुतस्य दर्शनात्प्रभृति यदन्यः पुरुषः मया हृदयेनापि न चिन्तितः, तेनैव सत्येन शपामि, इतः परमपि नाहमन्यं पश्यामि, महाभागपूर्ण-लावण्य सुधावारिधिप्रवाहविगाहपवित्राभ्यां नेत्राभ्याम् ।]

**कलकण्ठः** – सखे, चूषय श्रवणपीयूषम् ।

**मारुतः** – (सानन्दं)

अयि मन्मानसविहारमल्लिकाक्षि, मल्लिके !

तव हृदयसमूढप्रेमरागैः शुभाङ्गि

प्रतिनवपरिवाहस्यन्दहृद्यैर्वचोभिः ।

---

1. मङ्गलाङ्गस्स [मङ्गलाङ्गस्य], $मु_2$, $म_1$ 2. पवित्तहिंते हि, $मु_1$

स्मरहुतवहदग्धः शीतलैः सर्वतोऽहं
स्नपित इव सुवाणि! प्राणिमि प्राणनाथे ॥13॥

(पुनर्नेपथ्ये)

नवमालिके ! ननु भण्यते त्वर्यतां सन्निहितः खलु मौहूर्तिकगणगृहीतः परिणयसमयः !

(सर्वे आकर्णयन्ति)

**मल्लिका** – (सबाष्पं)

हत्थि, पुणोवि भअवई आदिसइ, सहि णोमालिए ! उट्ठेहि, उट्ठेहि ! जाव इह एक्कदा आअमिस्सदि भअवई ताव एव्व एत्थ लआवल अंतरं गदुअ किं वि तुह्मे पत्थइस्सामि।

[हन्त, पुनरपि भगवती आदिशति, सखि नवमालिके ! उत्तिष्ठोत्तिष्ठ ! यावदिह एकपदे आगमिष्यति भगवती तावदेवात्र लता-वलयान्तरं गत्वा किमपि युवां प्रार्थयिष्ये ।]

**नवमालिका** – सहि, आणादाणा जोग्गो जणो कीस पत्थीअदि। ता जहिट्ठं अह्मे अहिलसिए अत्थे णिओइअ उिव्वट्टेहि भअवईए आदेसम्।

[सखि, आज्ञादानयोग्यः जनः कस्मात्प्रार्थयते ? तस्मात् यथेष्टं आवां अभिलषितार्थे[1] नियोज्य निर्वर्तय भगवत्या आदेशम् ।]

---

1. अभिलषितेऽर्थे, के$_4$, के$_5$

**मल्लिका** – सहि विसादं संभमवेविरङ्गी[1] ण पारेमि उट्ठिउं वाहपूरत्थइअणअणा ण सक्कुणोमि दट्ठुं वि । ता तुमं मह हत्थं ओलंविअ उट्ठावेहि[2] ।
[सखि, विषादसंभ्रमवेपिताङ्गी न पारयामि उत्थातुं बाष्पपूरस्थगितनयना न शक्नोमि द्रष्टुमपि। तस्मात् त्वं मम हस्तमवलम्ब्य उत्थापय ।]

(इति हस्तं प्रसारयति सख्यौ संज्ञया मारुतं पाणिग्रहणाय चोदयतः। मारुतः साध्वसं नाटयति।)

**कलकण्ठः** – सखे नायं साध्वससमयः। अनुभूयतां [3]चिरकाङ्क्षितमल्लिकायाः पाणिग्रहणमहोत्सवः ।

(मारुतः लतावलयान्निर्गत्य मल्लिकायाः पाणिं सपुलकं गृह्णाति ।)

**मल्लिका** – (सहर्षं)
सहि णोमालिए अण्णारिसो[4] तुह हत्थसोहग्गो जं गहिअमेत्ते एव्व हत्थे अमुअवरिस सित्ताई विअणिव्वुदाइ मह अङ्गाइ ।
[(सहर्षं) सखि नवमालिके, अन्यादृशो तव हस्तस्पर्शः यद्गृहीतमात्र एव हस्ते अमृतवर्षसिक्तानीव निर्वृतानि ममाङ्गानि ।]

(मारुतमवलम्बमानैवोत्तिष्ठति। मारुतः अदत्तप्रतिवचन एव मन्दमन्दं नयति। सख्यौ सस्मितमनुगच्छतः।)

**कालिन्दी** – सहि मल्लिए, पत्तह्म लअंदरम् । दा कहेहि कहणिज्जम् ।

---

1. वेअणसीलङ्गी, $मु_2$ 2. इदो सणिअं ण एहि ल अन्तरं, $मै_4$, $मु_2$
3. add काल, $मु_1$ 4. add अज्ज, $म_2$, $मु_2$

[सखि मल्लिके, प्राप्ता स्मः लतान्तरम् । तस्मात् कथय कथनीयम् ।]

**मल्लिका** – (सनिश्वासं)

सहि णोमालिए! कस्सिं लआमूले आअदह्म ?

[सखि नवमालिके! कस्मिन् लतामूले आगता स्मः ?]

**नवमालिका** – इदं वहललआ कुसुमरसपरिवाहमेदुरपरिमल लोललोलम्बपुञ्जबद्धतिमिरं मन्दारमूलम् ।

[इदं वकुललताकुसुमरसपरिवाहमेदुरपरिमललोल-लोलम्बपुञ्जबद्धतिमिरं मन्दारमूलम् ।]

**मल्लिका** – (सबाष्पगद्गदं)

हन्त, मए एव्व वड्ढिदो एसो मन्दारो ।

(सानुनयं)

ता विवित्ते एत्थ पदेसे किं वि तुहे पत्थेमि ।

[(सबाष्पगद्गदं) हन्त मयैव वर्धित एष मन्दारः । तस्माद्विविक्तेऽत्र प्रदेशे किमपि युवां प्रार्थये ।]

**कालिन्दी** – अवहिद ह्म । [अवहिते स्वः ।]

**मल्लिका** – अयि जीविअणिव्विसेसो मारुओ

(इत्यर्धोक्ते वैलक्ष्यं[1] नाटयति । सख्यौ परस्परं स्मयेते )

---

1. लज्जां, म$_2$

अयि जीविअणिव्विसेसे णोमालिए, पिए[1] कालिन्दि, जस्स परिपुण्णचन्दसुन्दराङ्गस्स महाभाअस्स चलण-सुस्सूसण सोहग्गपच्चासा पडिट्ठाविअ विहडन्तनजीविआए मए पुडमदंसणादो पहुदि एत्तिअं समअं[2] सहिदाअ मन्द-मन्दचलिअघरदीहिआरविन्दमअरन्दवाहिणो उज्जाण-मारुआ आअण्णिदा अ पअण्डमअरद्धअभुअदण्ड-कुण्डलिअ धणुहदिढ टङ्कारघोरामहुरहुंकारा। अदिवाहिदा अ पल्लविअ माअंदकुहरविहरन्तकुहूमुहघडिउड्डमरपञ्चमपवञ्चा वअन्तदिअहा। आआसिदा अ तुह्मे किसलयतप्पकप्पेहिं मुणालभङ्गहाररअणेहिंकदलीदलधप्पितवीअणेहिं कप्पूर-कखोढचच्चिक्कसंपादणेहिं अण्णेहिं वि तेहिं तेहिं मअणोवआरेहिम् । जेण वा तह रक्खसहत्थादो पब्भट्टा गअणम्मि णिपडन्ती तस्सिं णिसीहे रक्खिदह्मि। तस्स पुण्णभाइणीणं एव्व सुलहस्स महाभाअस्स जइ दुल्लहो एव्व सङ्गमो ता मण्णे [3]महापादएसु ण एक्कतमं खणं वि मह जीविअ धारणं ति। ता आमन्तेमि तुह्मे पुणोवि जणणंतरे दंसणस्स।

(सप्रश्रयं अञ्जलिं बद्ध्वा, सगद्गदं)

सहि, मह किदे एव्वं पणम्मिअ विवित्ते विण्णादिव्वो तुए सुन्दरब्भूलआलञ्छिछअ [4]दीहरसिणिद्ध-लोअणपुण्डरीओ सो जणो जह परलोह गदाए वि मह जलंजलिदाई होइ । (इति रोदिति)

---

1. सहि [शखि], मु$_2$ 2. add पेच्छन्तीए, मु$_1$
3. मुहं°, मु$_1$ 4. भुमआलच्छी,[ भ्रूलक्ष्मी], मु$_2$

अयि जीवितनिर्विशेषमारुत! (इत्यर्धोक्ते वैलक्ष्यं[1] नाटयति, सख्यौ परस्परं स्मयेते) अयि, जीवितनिर्विशेषे, नवमालिके! प्रियकालिन्दि, यस्य परिपूर्णसुन्दराङ्गस्य महाभागस्य चरणशुश्रूषणसौभाग्यप्रत्याशाप्रतिष्ठापित[2]-विघटमानजीवितया मया प्रथमदर्शनात्प्रभृति एतावन्तं समयं सोढाश्च[3] मन्दमन्दचलितगृहदीर्घिकारविन्द-मकरन्दवाहिनः उद्यानमारुताः। आकर्णिताश्च प्रचण्ड-मकरध्वजभुजदण्डकुण्डलितधनुर्दृढटङ्कारघोरा मधुकरहुंकाराः। अतिवाहिताश्च पल्लवितमाकन्दकुहरविहरत्कुहूमुख-घटितोड्डामरपञ्चमप्रपञ्चा वसन्तदिवसाः। आयासिते च युवां किसलयतल्पकल्पनैर्मृणालभङ्गहाररचनैः कदलीदल-धवित्रवीजनैः कर्पूरक्षोदचार्चिक्यसंपादनैरन्यैरपि तैस्तैर्मदनोपचारैः। येन वा तथा राक्षसहस्तात् प्रभ्रष्टा गगने निपतन्ती तस्मिन् निशीथे रक्षितास्मि। तस्य पुण्यभागिनीनामेव सुलभस्य महाभागस्य यदि दुर्लभ एव सङ्गमः, तस्मान्मन्ये महापातकेष्वेकतमं क्षणमपि मम जीवितधारणं इति। तस्मादामन्त्रये युवां पुनरपि जननान्तरे दर्शनाय। (सप्रश्रयं अञ्जलिं बद्ध्वा, सगद्गदं) मम कृते एवं प्रणम्य विविक्ते विज्ञापितस्त्वया सुन्दरभ्रूलतालाञ्छित-दीर्घस्निग्धलोचनपुण्डरीकः स जनः, यथा परलोकगताय अपि मह्यं जलाञ्जलिदायी भवति। (इति रोदिति)

**मारुतः** – (सकरुणं, स्वगतं)

---

1. लज्जां, $म_2$ 2. प्रस्थापित, $के_4$ 3. सहिता, $अ_2$

एतानस्याः[1] शिव शिव तनुत्यागबद्धोद्यमायाः

कल्याणाङ्ग्याः करुणमधुरान् श्रृण्वतो मे विलापान् ।

दाक्षिण्येन द्रवति दययोल्लीयते मोहवृत्या

म्लायत्यर्त्या स्फुटति हृदयं हर्षतः स्फायते च ॥ 14 ॥

(नवमालिका अश्रूणि वर्तयति)

**मारुत**– (प्रकाशं)

वीणाभिरामकलकोमलवाणि रामे

मा मा वरोरु करुणं भण वामवामे ।

हा हन्त बन्धुजन[2]चित्तसरोजहंसि

दूरं विमुञ्च सहचारिणि साहसानि ॥ 15 ॥

**नवमालिका** – (जनान्तिकं)

कालिन्दि, अह्मासिसजणोइए वाअडे वि समाणं एव्व महाभाअस्स वअणम् । ता मण्णे ण जाणइ पिअसही अज्ज वि महाभाअम् ।

[कालिन्दि, अस्मादृशजनोचिते प्राकृतेऽपि समानमेव महाभागस्य वचनम् । तस्मात् मन्ये न जानाति प्रियसखी अद्यापि महाभागम् ।]

**मल्लिका** – सहि मुग्धे, साहसं ति कहं भणिज्जइ जेण मम्मह जीवलोएण मल्लाह भङ्गकाअरहिअएण तह णिसीढदुग्गे पदेसे एक्केण[3] गदुअ

---

1. एतानर्घ्याः, त$_2$  2. गण, के$_2$  3. एतेण, म$_2$ एतेन

सअलभूमण्डलेक्कमण्डणस्स अप्पणो[1] कम्बुराअ-
सुन्दरे कन्धराकण्डे खग्गप्पसारणसाहसं अणुट्ठिअम् ।
तस्स किदे जीविदसहसस्सपरिच्चाअं वि ण साहसं[2]
एव्व ता एत्थ ण पडिऊला होहि विण्णवेहि पुणो
वि मह वअणेण महाभाअम् ।

(सगद्गदं)

णाह, साहं मन्दभाइणी एतस्सिं जम्मणे[3] तुह
अलद्धपरिरम्भसोहग्गा[4] ता जणणन्तरे वा तुह एव्व[5]
पिअसङ्गमं कङ्खेमि[6] । सा उण मह[7] सहजा मालिआ
णाहेण मरगअकवाडसिणिद्धविसाले वच्छद्दले
मण्णिव्विसेसं सव्वदा धारणिज्जा ।

(इति मारुतं [8]दृढमालिङ्गति[9] । सानन्दं, साशङ्कं, स्वगतं)

कहं पिअसहीए सव्वङ्गीणचन्दणसार वरिस-
सरिसो महाभाअपरिरम्भसंवादी फस्सो । मण्णे
हिअअ सण्णिहिदो मं सुहावेदि ।

---

1. om अप्पणो, $मु_1$ [आत्मनः]

2. तस्सिं दुल्लहे जीविअपरिच्चाअसाहसं अणुचिट्ठामि, $मु_1$
[तस्मिन् दुर्लभे जीवितपरित्यागसाहसमनुतिष्ठामि ।]

3. एक्कस्सिम्मि खणे [एकस्मिन् क्षणे], $मु_1$

4. $मु_1$ reads परिरम्भा in the place of परिरम्भसोहग्गा ।

5. एव्व [sugested reading]

6. तक्केमि, $म_2$

7. तुह, $म_2$

8. सुचिरं, $मु_2$, $त_2$

9. इति सुचिरं मारुतं आलिङ्गति, $म_2$

(प्रकाशं)

सहि णोमालिए, जाणेहि एदं पच्छिमं परिरम्भम् ।

[सखि, मुग्धे साहसमिति कथं भण्यते ? येन मन्मथजीवलोकेन मल्लाभभङ्गकातरहृदयेन तथा निशीथ-दुर्गमे प्रदेशे एकेन गत्वा सकलभूमण्डलैकमण्डनस्य आत्मनः कम्बुराजसुन्दरे कन्धराकाण्डे खड्गप्रसारण-साहसमनुष्ठितम् । तस्य कृते जीवितसहस्रपरित्यागोऽपि न साहसमेव । तस्मादत्र मा प्रतीकूला भव । विज्ञापय पुनरपि मम वचनेन महाभागम् । (सगद्गदं) नाथ सा अहं मन्दभागिनी एतस्मिन् जन्मनि तवालब्धपरिरम्भसौभाग्या जननान्तरे वा तवैव सङ्गमं काङ्क्षे । सा पुनर्मम सहजा मालिका नाथेन मरकतकवाटस्निग्धविशाले वक्षःस्थले मन्निर्विशेषं सर्वदा धारणीया । (इति मारुतं दृढमालिङ्गति । सानन्दं, साशङ्कं, स्वगतं) कथं प्रियसख्या सर्वाङ्गीणचन्दन-सारवर्षसदृशः महाभागपरिरम्भसंवादी स्पर्शः? मन्ये हृदयसन्निहितो मां सुखयति । (प्रकाशं) सखि नवमालिके, जानीहि एतं पश्चिमं परिरम्भम् ।]

**सख्यौ** – (सस्मितं, स्वगतं)

णहि णहि पच्छिमो परिरम्भो । अवि दु पुढमो दुईओ वा ।

[नहि नहि पश्चिमः परिरम्भः । अपि तु प्रथमो द्वितीयो वा ।]

**मारुतः** – (परिरभ्यमाण एव, सानन्दं)

कल्याणाङ्गि [1] दृढानुरक्तमनसा त्वं येन संप्रार्थ्यसे
यस्यार्थे सुमुखि त्वया पुनरसुत्यागेऽपि सन्नह्यते ।

**मल्लिका** – (स्वगतं)

कीस सक्कहिअं अङ्गिकिअं पिअसहीए ?

(प्रकाशं)

सहि कहिं सो ?

[(स्वगतं) किं संस्कृतमङ्गीकृतं प्रियसख्या ?

(प्रकाशं) सखि, कुत्र सः ?]

**मारुतः** –

सोऽयं सुन्दरि पञ्चबाणविशिखव्यालीढदोरन्तर-
स्वैरोत्पीडितपीवरस्तनतटस्त्वद्दोर्लतापञ्जरे ॥16॥

**मल्लिका** –अम्महे महाभाओ ! [अहो महाभागः !]

(सहर्षसाध्वसं सलज्जं झटित्यपक्रामति)

**मारुतः** –

मा मा ससाध्वसमपेहि[2] विलोलनेत्रे
दासे जने किमिति संभ्रमकातरासि ।
किं युज्यते बत मया चिरकाङ्क्षितस्य
मध्ये वराङ्गि परिरम्भसुरवस्य भङ्गः ॥ 17 ॥

**मल्लिका** – (सव्रीडं, सासूयं च)

सहिओ साहु विप्पलद्धह्मि[3] ।

---

1. कल्याणाङ्गरुचानु, मु$_1$ 2. अवेहि, मु$_1$ 3. om विप्पलद्धह्मि, मु$_1$

[सख्यः, साधु विप्रलब्धास्मि ।]

**कलकण्ठः** - (सहसोपसृत्य)

कल्याणि, मैवं वादीः ।

विश्वोत्तरं प्रियसखं मम भूषयन्ती
न त्वं[1] समस्तगुणशालिनि विप्रलब्धा ।
त्वत्प्राप्तिलोभमृगतृष्णिकयाऽवगाढो[2]
दिष्ट्या स शम्बरक एव तु विप्रलब्धः ॥18॥

ततश्च

सौरभ्यसंपदिव चन्दनपादपस्य
ज्योत्स्नेव शीतकिरणस्य मणेः प्रभेव ।
त्वं शोभने भवविभूषणमस्य तासां[3]
तैर्वामुनास्तु तव चाभ्युदयाय लम्बः ॥19॥

**भ्रमरकः**-(उपसृत्य)

णोमालिए, दिट्ठिआ वड्ढाम णाह णं अब्भुदएण ।

[नवमालिके, दिष्ट्या वर्धामहे[4] नाथयोरभ्युदयेन ।]

(प्रविश्य, प्रहृष्टवदना मन्दाकिनी ।)

**मन्दाकिनी** -

देवी लक्ष्मी पार्वती वागधीशा
सीतेन्द्राणी[5] रुक्मिणी सत्यभामा ।

---

1. तत्त्वं, $त_{2}$
2. निबद्धो, $त_{2}$, $के_{1}$
3. सोऽयं, $मु_{2}$, $के_{1}$
4. वर्धामी, $अ_{2}$
5. लक्ष्मी गौरी वागधीशाऽपि सीता भैमीन्द्राणी, $मु_{2}$, $मै_{3}$

सावित्री सारुन्धती[1] याज्ञसेनी
शर्मिष्ठा च स्वस्तिदा स्युः प्रहृष्टाः ॥ 20 ॥

(सर्वतो विलोक्य, साशङ्कं)

क्व नाम इतोगता भवेल्लताभवनान्मल्लिका .

(लतान्तरेण दृष्ट्वा, सानन्दं)

हन्त, पूर्णा इव[2] मनोरथाः । अत्र[3] हि मन्दारमूले मारुतः ।

अयमतिसुकुमारक्षामरम्येण मास-
प्रमित इव मृगाङ्को लोभनीयोऽङ्केन ।
विलसति[4] नयनान्तं चालयन्[5] व्रीडनम्रे
मदनशबलनेत्रे मल्लिकाया मुखेन्दौ ॥ 21॥

(प्रकाशं)

नवमालिके, किमिति विलम्ब्यते ?

**नवमालिका** - अह्महे ! भअवदी आअदेव्व ।

(प्रत्युद्गम्य)

भअवदि, अह्मेहिं ण विलम्बीअदि ।

[अहो भगवती आगतैव । (प्रत्युङ्गम्य) भगवति, अस्माभिर्न विलम्ब्यते ।]

**मल्लिका** - (सगद्गदं)

---

1. सार्धं भैम्यारिन्धती, $म_2$,$त_2$, $अ_1$,$के_{1-2}$ 2. मम, $के_1$ , $त_2$
3. तत्र, $अ_1$ 4. विकसति, $त_2$ 5. चारयन् , $मु_2$

भअवदि, परित्ताअसु, परित्ताअसु ।

[भगवति, परित्रायस्व, परित्रायस्व । ]

(इत्यञ्जलिं बद्ध्वा आगच्छति )

**मन्दाकिनी** - (मल्लिकामालिङ्ग्य), वत्से,

तुल्यप्रेमणि महाभिजन्मनि जगन्नेत्राभिरामे जने
त्वं कल्याणि [1]सदानुरक्तहृदयश्लाघ्या सकामा भव ।
सोऽयं च प्रतिपद्य पुण्यसुलभां त्वां [2]तुल्यरागश्चिरा-
दन्तः संभृतमङ्गजज्वरमहोद्दाहं जहात्वञ्जसा ॥ 22 ॥

**नवमालिका** - (सानन्दं)

भअवदि, णिव्वुत्तमणोहरङ्गे इमस्सिं मिहुणेणिअणिम्माण वेअड्ढीए सफलत्तेण चिरस्स कअट्ठो होदुपआवई । पसीदन्तु सम्बरअ-परिणअप्पसङ्ग कलुसिआई बन्धुजणस्स हिअआइ । ता माइपिउणिव्विसेसाणं तुह्माणं हत्थेण एव्व दज्जा महाभाअस्स करम्मि पिअसही ।

[भगवति, निर्वृत्तमनोहराङ्गे अस्मिन् मिथुने निजनिर्माणवैदग्ध्याः सफलत्वेन कृतार्थो भवतु प्रजापतिः । प्रसीदन्तु शम्बरक-परिणयप्रसङ्गकलुषितानि बन्धुजनहृदयानि । तस्मान्मातापितृनिर्विशेषाणां युष्माकं हस्तेनैव देया महाभागस्य करे प्रियसखी ।]

---

1. हृढा, $त_2$, $के_2$ 2. धर्मधारां, $मु_2$, $के_2$

**मल्लिका** – (स्वगतं)

सव्वहा सव्वमङ्गलावअणं पमाणं एव्व ।

[सर्वदा सर्वमङ्गलावचनं प्रमाणमेव ।]

**मन्दाकिनी** – नवमालिके, किं मयाऽद्य दातव्येति ?

ननु प्रागेव तस्मिन् व्यतिकरे,

आच्छिद्य राक्षसकरादक्षतदेहैव रक्षिता देव्या ।
आधिगलमर्पितशस्त्रे हस्ते दत्ताऽस्य सर्वमङ्गलया ॥ 23 ॥

अपि च,

अस्मिन् परस्पररुचिप्रकृते विवाहे
सेयं [1]निजैर्न गुरुभिः प्रतिपादनीया ।
प्राणेश्वरोदयपरायण[2]हर्षयोगा
केनार्पिता कुमुदिनी शशलाञ्छनाय ॥ 24 ॥

तथापि लोकयात्रानुवृत्तिमात्रं क्रियते[3] मारुतं प्रति । एहि वत्स मारुत !

**मारुतः** – आदिशतु भगवती ।

**मन्दाकिनी** –

एषा विश्रुतवैभवस्य यशसामूर्जस्वलानां विधेः[4]
पुत्री विश्ववसोः रमेव जलधेः पुण्येन लब्धा चिरात् ।
एनां तुभ्यमहं ददामि चरितुं धर्मान् सह श्रेयसे[5]
देवेन स्वयमङ्गजेन विहिते[6] रागानले साक्षिणि ॥ 25 ॥

---

1. पुन°, $म_2$,$मु_2$ 2. पराशय, $त_2$ 3.°वृत्तिमात्रक्रिया सम्प्रति, $मु_1$
4. निधेः, $म_1$,$के_1$ 5. श्रेयसो, $मु_2$,$मै_4$,$के_1$,$अ_1$ 6. सुहृते, $त_2$, $के_1$

**कलकण्ठः** – [1]फलितमस्मत्सुकृतसुरद्रुमेण ।

**नवमालिका** – पसण्णा अह्माणं कुलदेवदाओ ।

[प्रसन्ना अस्माकं कुलदेवताः ।]

**कलकण्ठः** –(सहर्षं)

भगवति, सर्वाकारानवद्यममुं सम्बन्धमालोक्य प्रसीदति हृदयम् । पश्य –

सहजघनविलासौदार्यसौन्दर्यराशे-
र्जननयनचकोरानन्दने चन्द्रिकायाः ।
परिणयकुतुकं यच्चानयोः श्लाघनीयं[2]
कनककुसुमदाम्नः सोऽयमामोदयोगः ॥ 26 ॥

**नवमालिका** – (मल्लिकां निर्वर्ण्य, सनिःश्वासं, स्वगतं)

अवि णाम अज्ज विअ महाभाअस्स सव्वदा वल्लहा भवे पिअसही ?

[अपि नाम अद्यैव महाभागस्य सर्वदा वल्लभा भवेत् प्रियसखी ?]

**मन्दाकिनी** – (विमृश्य, सबाष्पं) वत्स मारुत !

**मारुतः** – (साशङ्कं) आज्ञापयतु भगवती ।

---

1. सुख, $मु_1$

2. अतिविपुलममुष्या यत्कुलेनाभिजात्यं, $त_2$, $मु_2$, $के_1$

**मन्दाकिनी** –

ज्ञातज्ञातव्यसारे नहि भवति परेणोपदेष्टव्यमास्ते
वात्सल्यं केवलं मां मुखरयति ततो ब्रूमि कल्याणबुद्धे ।

(मारुतः सप्रश्रयं श्रृणोति । मन्दाकिनी मल्लिकां हस्ते गृहीत्वा)

एकापत्यं हि सेयं जनयितुरसवो बान्धवानां तदस्यां
मा स्यात् कालान्तरे ते स्वयमयमुदितः स्नेहबन्धो ह्रसीयान् ॥ 27 ॥

**मारुतः** – (सलज्जं)

हन्त वात्सल्यादशङ्कनीयमप्याशङ्क्यते युष्माभिः।

**कलकण्ठः**–भगवति, इत्थमतिप्रसक्ते युष्माकमभ्यर्थने वयस्यमधिकृत्य सदृशमुत्तरं न पश्यामि ।

स्नेहोऽस्यां स्थिरतामगादिति सकृद्दृष्टेऽपि तुल्यं जने
स्थाताऽस्या वश इत्यसाम्प्रतमसौ यद्भ्रूवशे स्थास्यति ।
दाक्षिण्येऽस्य समोऽस्ति नेति सुहृदि स्नेहोक्तिरस्यां स्फुटा[1]
प्राणांश्च[2] त्यजतीति सर्वमनयैवाध्यक्षितं[3] तन्निशि ॥ 28 ॥

**मन्दाकिनी** – (सविमर्शं, मल्लिकां प्रति)

पुत्री, त्वमपि किञ्चिदुपदिश्यसे ।

**मल्लिका** – आणवेदु भअवदी । [आज्ञापयतु भगवती।]

**मन्दाकिनी** –

---

1. अस्याः कृते, मु$_2$, अ$_1$, के$_2$ 2. नैनां स, मु$_1$
3. अध्यक्षते, मु$_1$

शुश्रूषामनुरुन्धती गुरुजने[1] वाक्ये ननान्दुः स्थिता
दाक्षिण्यैकपरायणा परिजने स्निग्धा सपत्नीष्वपि ।
सन्नद्धातिथिसत्कृतौ गृहभरे नैस्तन्द्र्यमाबिभ्रती
वत्से किं बहुना भजस्व कुशलं भर्तुः प्रिये जाग्रती ॥ 29 ॥

(मल्लिका सलज्जं मनसाऽङ्गीकरोति )

**नवमालिका** –उइओ उवदेसो । [उचित उपदेशः ।]

**मन्दाकिनी** –वत्स मारुत, इदानीं दुरात्मनः शम्बरकस्य वञ्चनाय प्रतिश्रुतागमं स्मर, माकन्दनामानं तं दिव्यपुरुषं गृहीत मल्लिकावेषः सन्निधत्स्वेति ।

(मारुतः ध्यानं नाटयति । ततः प्रविशति मल्लिकावेषधरो माकन्दः ।)

**माकन्दः** –सखे मारुत,अयमहमस्मि । साधयामि तवाभिलषितम् ।

(मन्दाकिनीमारुतवर्जं सर्वे विस्मयं नाटयन्ति ।)

**कालिन्दी** – (जनान्तिकं)
णोमालिए, सो एसो दिव्वपुरुसो जो रक्खसभावादो माइदो महाभाएण ।
[नवमालिके, स एष दिव्यपुरुषः यः राक्षसभावान्मोचितो महाभागेन ।]

**नवमालिका** – कालिन्दि, अच्चेरं जो पिअसहीए भक्खणपब्बट्टो सो अज्ज रक्खणे पि पवट्टइ ।
(मल्लिकां प्रति)

1. श्वशुरयोः, मु$_2$

सहि, पेच्छ, पेच्छ । अण्णावि कावि पिअसही अह्माणम् ।

[कालिन्दि, आश्चर्यं यः प्रियसख्याः भक्षणप्रवृत्तः, सोऽद्य रक्षणेऽपि प्रवर्तते ।(मल्लिकां प्रति)सखि, पश्य, पश्य । अन्याऽपि काऽपि प्रियसखी अस्माकम्।]

**मारुतः**- महापुरुष,तदाचर[1] भगवत्या यत्प्रागुपनाथितम् ।

**माकन्दः** - बाढम् । आचरामि ।

(प्रविश्य, काषायाम्बरयुलहस्ता सारसिका)

**सारसिका** - भअवइ एदाइ चवलएण आणीदाइ **अम्बराइ ।**

[भगवति, एते चपलकेन आनीतानि अम्बराणि।]

**मन्दाकिनी**[2]-वत्स कलकण्ठ, त्वं पुनरनेन काषाययुगलेन शोचनीयमपि मम वेषमवलम्बस्व । येन विषयोपभोगविरुद्धेनापि रमयन्तिकां लप्स्यसे ।

(सर्वे हसन्ति)

**मारुतः** - सम्भाव्येत तदपि कल्याणमस्माकम् ।

**कलकण्ठः** - (सस्मितमम्बरे गृहीत्वा, निष्क्रम्य, मन्दाकिनीवेषधरः प्रविश्य)

अयमस्मि भगवति !

**मारुतः** - पततु त्वच्चरणयोश्शम्बरकः ।

---

1. तत् त्वर, मु,

2. मु, omits from **मन्दाकिंनी** to **कल्याणमस्माकम् ।**

**मन्दाकिनी** – (कालिन्दीनवमालिके प्रति)
वत्से, युवाभ्यां सह कलकण्ठेनानुसर्तव्योऽयं[1] महापुरुषः ।

**उभे** – जं भअवदी आणवेदि ।
[यद्भगवत्याज्ञापयति ।]

**माकन्दः** – (सस्मितं)
भगवति, तद्गच्छामि शम्बकपरिणयाय ।

**मन्दाकिनी** – वत्स, साधय प्रागुपदिष्टेन पथाऽस्मदभिलषितम् ।

**माकन्दः** – एहि सखे कलकण्ठ, तुल्यस्त्वयाऽहं मारुतस्य ।

**कलकण्ठः** – महापुरुष, सर्वेषां नः पूज्यतमोऽसि । तदेहि गच्छामः ।

[2](कालिन्दीनवमालिकाभ्यां सह निष्क्रामतः ।)

**मल्लिका** – सहिओ मह का एत्थ सहाआ ?
[सख्यः, मम काऽत्र सहाया ?]

**नवमालिका** – (सस्मितं ईषन्निर्वृत्य)
पिअसहि, णं महाभाओ ।[प्रियसखि, ननु महाभागः ।]

**मन्दाकिनी** – भ्रमरक, त्वमपि गच्छ, गूढं विष्णुरातभवनम् । मधुकरिकोपदिष्टमनुतिष्ठ ।

**भ्रमरकः**–जं भअवई आणवेइ । [यद्भगवत्याज्ञापयति ।]

---

1. अनुवर्तितव्यो °, मु₁
2. मु₁ omits from कालिन्दी to गच्छामः, see P. 261

(इति निष्क्रामति)

**मन्दाकिनी**–वत्स मारुत, इयमुभयतो दृढनिबद्धवृत्ति-सुविहितरक्षास्मदाश्रयमुपश्लिष्यदुद्यानवीथी। सुकृत-श्चात्र मल्लिकायाः प्रतिदिनमम्बिकादर्शनाय कुसुम-धूलिसिकतिलो मार्गः। तद्वयमपि गच्छामः। रमणीयाश्च अस्मदाश्रमोपशल्यभूमयः। ततश्च तत्र [1]–

(मारुतं प्रति)

उत्कूजत्कोकिलालीकवलितसहकाराङ्कुरामेघशङ्का
प्रक्रीडन्नीलकण्ठस्वनमुखरतमालान्धकारोपगूढाः।
उच्चैरुद्यानसीमामरिचकिसलयग्रासगर्वाच्चकोरी-
चक्षुर्लौहित्यशारा विदधतु युवयोः स्वैरलीलासु सौख्यम्॥30॥

अपि च –

क्रीडाश्रान्तिषु तासु तासु कुसुमश्रेणीवितानाञ्चिते-
ष्वाराद्धाललतागृहेषु शनकैराराधयिष्यन्ति वाम्।
सद्यो निर्दलितप्रसूनमकरन्दासारमग्नोत्थिता
वातास्सोमसरस्तरङ्गकलहंसालापवाचालिताः॥31॥

(इति निष्क्रान्ताः सर्वे)

उद्दण्डं रङ्गनाथः सुतमलभत यं रङ्गदेवी तथाम्बा
त्रैविद्येशो महर्षिर्निरवधिमहिमा यद्धिते जागरूकः।
तस्य श्रीविक्रमाज्ञाबहुमतिरचिते मल्लिकामारुतेऽस्मि-
न्षष्ठः प्राप प्रतिष्ठां प्रकरणतिलके निष्कलङ्कोऽयमङ्कः॥[2]



---

1. अत्र, मु$_1$  2. मु$_1$ reads इति षष्ठोऽङ्कः। omits the verse.

## ॥ सप्तमोऽङ्कः ॥

(ततः प्रविशति नवमालिका)

**नवमालिका** – (सहर्षं)

दिट्ठिआ वड्ढिओ मूढो सम्बरओ जेण तत्तारिसवेससुउमारं तं दिव्वपुरुषं मल्लिएत्ति मण्णन्तो णिव्वुत्तविवाहविही सअलजणुग्घोसिअ जामादसद्दो एत्थ विहूराअघरे आअदवन्दो । अहवा किं एत्थ अच्चेरम् । जं गहिअपरमत्थाणं अह्माणं[1] वि तस्सिं पिअसहीबुद्धी पुणो पुणो होइ । अज्जाव्व अहं मअणसरपडणजज्जारिअधीरस्स[2] संबरअस्स कित्तिमलज्जामदणव्वावुढं तं बहुसो णाम अणु अंतीसअणघरे णिओजिअ कहं कहं वि णिग्गअह्मि ।

(विहस्य)

कलअंठेण[3] वि सुट्ठु अणुट्ठिज्जइ भअवदित्तणं जेण रुद्दराअ-संबरएहिं चरणेसु णिपडिअ, "भअवदी, तुह्मेहिं अणुऊलइदव्वा वामसीला रमअंतिएत्ति," बहुशो पत्थिदोपुढमसंकेदिअ महुअरिआगूढणिव्वट्ठिअरमअंतिआणेवच्चो भमरओ कलविङ्गएण परिणइदो ।

(सानुकम्पं)

सा क्खु तवस्सिणी रमअंतिआ एत्थ किं विण जाणाइ केवलं जइ मे कलविङ्गअस्स परिणओ

---

1.om अह्माणं, मु₁ 2. add अह, मु₁ 3. कलअंठस्स, मु₁

ता परिच्चइस्सं जीविअं त्ति गाढकिअणिच्चआ उज्जाणकेलिघरं गदुअ णिऊढा वट्टइ। जं उण ण परिच्चअइ जीविअं तत्थमहुअरिआवअणवट्ठिआ कलअण्ठलाहपच्चासेव्व परमं कारणम् ।

(परितो विलोक्य, सानन्दं)

अह्यव्ववसाअसमुइओ णिद्दलिअ णीलञ्जण-पुञ्जमंसलन्धआरणिब्भरो णिसीढारम्भो उच्छ-वव्वावार परिस्सन्तपसुत्तोअ सअलो परिअणो।

(परिक्रम्य, अग्रतो दृष्ट्वा)

एसो चउस्सालेक्के देसे गहिअ भअवईवेसो कलअण्ठो णववहूवेसघरं भमरअं महुअरिआए सह किञ्चिअ अणुवट्टइ ।

(पुनर्विलोक्य, सहासं)

हन्त जामादुओ कलविङ्गओ वि इहव्व वट्टइ। ता अहं वि गदुअ वड्ढावेमि परिहासलअम् ।

[(सहर्षं) दिष्ठ्या वञ्चितो मूढः शम्बरकः। येन तत्तादृशवेषसुकुमारं तं दिव्यपुरुषं मल्लिकेति मन्वानः निर्वृत्तविवाहविधिः सकलजनोद्धोषित-जामातृशब्दः अत्र विष्णुरातगृहे आगतवान्। अथवा किमत्राश्चर्यम् ? यद्गृहीतपरमार्थानां अस्माकमपि तस्मिन् प्रियसखीबुद्धिः पुनः पुनर्भवति । अद्यैवाहं मदनशरपतनजर्जरितधैर्यस्य शम्बरकस्य कृत्रि-मलज्जामदनव्यापृतं तं बहुशो नाम अनुनयन्ती

शयनगृहे नियोज्य कथं कथमपि निर्गताऽस्मि। (विहस्य) कलकण्ठेनापि सुष्ठ्वनुष्ठीयते भगवतीत्वं, येन रुद्ररातशम्बरकाभ्यां चरणयोर्निपत्य, "भगवति, युष्माभिरनुकूलयितव्या वामशीला रमयन्तिकेति," बहुशः प्रार्थितः । प्रथमसङ्केतितमधुकरिकागूढनिवर्तित-रमयन्तिकानेपथ्यो भ्रमरकः कलविङ्ककेन परिणायितः । (सानुकम्पं) सा खलु तपस्विनी रमयन्तिका अत्र किमपि न जानाति, केवलं यदि मे कलविङ्ककस्य परिणयः तत्परित्यक्ष्यामि जीवितमिति गाढकृत-निश्चया उद्यानकेलीगृहं गत्वा निगूढा वर्तते। यत्पुनर्न परित्यजति जीवितं, तत्र मधुकरिकावचनवर्धिता कलकण्ठ-लाभप्रत्याशैव परमं कारणम् । (परितो विलोक्य, सानन्दं) अस्मद्व्यवसायसमुचितो निर्दलित-नीलाञ्जनपुञ्जमांसलान्धकारनिर्भरो निशीथारम्भः । उत्सवव्यापारपरिश्रान्तप्रसुप्तश्च सकलः परिजनः । (परिक्रम्य, अग्रतो दृष्ट्वा) एषः चतुःशालैकदेशे गृहीतभगवतीवेषः कलकण्ठो नववधूवेषधरं भ्रमरकं मधुकरिकया सह किञ्चिदनुवर्तते। (पुनर्विलोक्य, सहासं)हन्त, जामातृकः कलविङ्ककोऽपि इहैव वर्तते, तस्मादहमपि गत्वा वर्धयामि परिहासलताम् । ]

(इति निष्क्रान्ता)

(प्रवेशकः)

(ततः प्रविशति यथनिर्दिष्टाः कलकण्ठभ्रमरक-मधुकरिकाकलविङ्ककाः, नवमालिका च ।)

**कलकण्ठः** – (साशंसं, जनान्तिकं)

नवमालिके,

किमपि फलितो मन्दाकिन्याः सुगूढविवर्धितो

[1]नयसुरतरुर्भूयः फलिष्यति वा न वा ।

अवधिविधुरानङ्गातङ्कव्यपोहमहौषधीं

सुकृतसुलभां किं वा लप्स्ये प्रियां मदयन्तिकाम् ॥1॥

**नवमालिका** – (जनान्तिकं)

महाभाअ, सुरदरू कहं ण फलिस्सदि ? अवि अ गदा क्खु पुडमं एव्व लआघरमज्झणिऊढाए रमअंतिआए सविहं कालिन्दी । ता सा एव्व सव्वं संजोअइस्सदि । एत्थ उण पेच्छीअटु दाव एसो खणं परिहासो ।

[महाभाग, सुरतरुः कथं न फलिष्यति ? अपि च गता खलु प्रथम एव लतागृहमध्यनिगूढायाः रमयन्तिकायाः सविधं कालिन्धी । तस्मात्सैव सर्वं संयोजयिष्यति । अत्र पुनः प्रेक्ष्यतां तावदेव क्षणं परिहासः ।]

**कलविङ्कः** – भगवति, किमेषा वदति नवमालिका ? अपि चाटुचतुरस्य मद्गुरोः शम्बरकस्य प्रणय-सरसैरनुनयवचनैर्जनितविस्रम्भाऽऽगता शयन-गृहमाकाशवाणीप्रभावलब्धा मल्लिका ।

**कलकण्ठः** – (स्वगतं)

भूयोऽपि भगवतीस्वरेण व्यवहरामि ।

---

1. नव; मु₁

(प्रकाशं)

सत्यं चाटुचतुर एवास्माकं जामाता । कथयति नवमालिका तथा व्रीडाशालिन्यपि मे वत्सा नवेऽपि वोढरि चिरसंस्तुत[1] इव जातविस्रम्भा शय्यागृहं प्रविष्टेति ।

**नवमालिका** – भअवइ, किं बहुणा । उवकिदं[2] अह्माणं आआसवाणीए जदो एव्वं णाम दक्खिणो जामादा लद्धो अह्मेहिम् ।

[भगवति, किं बहुना । उपकृतमस्माकं आकाशवाण्या यतः एवं नाम दक्षिणो जामाता लब्धोऽस्माभिः ।]

(कलविङ्कः आकाशवाणीप्रसङ्गेन सहर्षं अन्तः स्मयते)

**मधुकरिका** – अह्माणं उण भअवदीए उवकिदं[3] जाए रुद्धराअपक्खे ठिदाए दक्खिणत्तणणअसीलसो भग्गादिहिं गुरुं पि अदिसअंतस्स एदस्स जामादुणो अह्मे वि णिब्भच्छिअ दिण्णा पिअसही रमअंतिआ अह्मेहिं उण एत्तिअं समअं ण जाणिदो एव्वं विहो एसोत्ति ।

[अस्माकं पुनर्भगवत्योपकृतं यया रुद्रातपक्षे स्थितया दक्षिणत्वनयशीलसौभाग्यादिभि-र्गुरुमपि अतिशयानाय एतस्मै जामात्रे अस्मानपि

---

1. संस्कृत, मु$_1$ 2. उक्कअं, मु$_2$ 3. अवकअं, मु$_2$

निर्भर्त्स्य दत्ता प्रियसखी रमयन्तिका अस्माभिः पुनरेतावन्तं समयं न ज्ञातः एवंविध एष इति ।]

**कलविङ्कः** –(सानन्दं, स्वगतं)

सत्यमाह मधुकरिका असंस्तवान्नावगता एव मद्गुणा मुग्धया रमयन्तिकया ।

(मदनपीडां नाटयति)

**भ्रमरकः** – (सगूढस्मितं, स्वगतं)

णडइस्सं मिच्छाविसालसालीणत्तणम् ।

[नटयिष्ये मिथ्याविलासशालीनत्वम् ।]

(मूर्धानं नमयति)

**कलविङ्कः** – भगवति ! लज्जावती[1] न पश्यत्यपि मामियं दीर्घविशालेन लोचनेन । अतः कथय किमत्र प्रतिविधातव्यम् ।

**कलकण्ठः** –उपायं किं न जानासि ?

छन्दानुवृत्तिपरताव्याजेनालापसंभेदः ।

हठवैमुख्यमितीमे मुग्धाविस्रम्भणोपायाः ॥ 2 ॥

**कलविङ्कः**– सम्यगुपदिष्टं भगवत्या । तत्प्रथमं आलापसंभेदेनास्याः लज्जां कणशः खण्डयामि ।

(भ्रमरकं प्रति)

अयि सुवचने ! संलप मां कलकण्ठधिक्कारिणा वचनेन ।

**भ्रमरकः** – (सक्रोधं, जनान्तिकं)

---

1. लज्जाशाली, म$_2$

महुअरिए, एदस्स णाहकलअण्ठधिक्कारणिरदस्स कवोले किं असणिवादणिट्ठुरं चविढं देमि, जह सव्वे वि दन्ता गुलुगुलुत्ति गलन्ति ।
[मधुकरिके, एतस्य नाथकलकण्ठधिक्कारनिरतस्य कपोले किं अशनिपातनिष्ठुरं चपेटां ददामि, यथा सर्वेऽपि दन्ताः गुलुगुलु इति गलन्ति ।]

**मधुकरिका** – (विहस्य, जनान्तिकं)
अदिकोव, ण खणमेत्तं वि कहं ण सहिज्जइ णं अणुपदेंव्व एव्वं करिस्ससि ।
[अतिकोप, न क्षणमात्रमपि कथं न सह्यते, नन्वनुपदमेव एवं करिष्यसि ।]

**कलविङ्कः** – मधुकरिके, कस्मादियं आबद्ध-भ्रूलताभङ्गमुत्कुपितेव ते प्रियसखी ।

**मधुकरिका** – सच्चं उक्कुपिदेव्व । [सत्यमुत्कुपितैव ।]

**कलविङ्कः** – (सावेगं)
किमिति निर्निमित्तं कुप्यति !

**मधुकरिका** – एसा क्खु अदिमाणंसिणी सुबअण्णासद्देण अक्कारिदो गोत्तक्खलिअं संकेइ ।
[एषा खलु अतिमनस्विनी सुवचनाशब्देन आकारिता गोत्रस्खलितं शङ्कते ।]

**कलकण्ठः** – (सस्मितं) युज्यत एतत् ।
मानाग्निवर्धनमहौषधमेतदेव
स्त्रीणां सपत्नवनिताह्वयकीर्तनं यत् ।

[1]निर्व्याजनिर्भरभयप्रणतोत्तराणां[2]
मन्ये विशेषत इदं कुलकन्यकानाम् ॥ 3 ॥

**नवमालिका** - भअवदि,[3] णं जामादुणो एसेव्व सुवअणासद्देण संबोहिआ सोहणं से वअणं ति ।

[भगवति, ननु जामात्रा एषैव सुवचनाशब्देन सम्बोधिता शोभनमस्या वचनमिति ।]

**कलविङ्कः** - सत्यमाह नवमालिका, ननु इयमेव सुवचना ।

(निःश्वस्य)

हन्त, किमत्र प्रतिविधास्ये ! भगवति, युष्माभिरियं प्रसादनीया ननु प्रागपि युष्माभिरेव निर्वर्तितोऽयमावयोः परिणयः ।

**कलकण्ठः** -जामातः, नातःपरमस्माकमधिकारः । पश्य-

यावद्यूनोः परिणयविधिः संप्रवर्तेत ताव-
द्विघ्नच्छित्त्यै विहितधृतयो बन्धवो व्याप्रियेरन् ।
पश्चान्मानातिशयसुलभप्रेमकोपप्रसादे
[4]पारस्पर्यात्प्रभवत इमौ केवलं पुंस्पुरन्ध्र्यौ[5] ॥ 4 ॥

**कलविङ्कः**-(सविषादं)

तर्हि कथ्यतां को नामस्याः कोपप्रशमनोपायः ।

---

1.अव्याज;मु$_1$, म$_1$, म$_2$, त$_1$, के$_1$, के$_2$ 2. भवत्प्रणयोः मु$_2$, अ$_1$
3.om भअवदि, मु$_1$, 4. पारम्पर्या॰, मु$_1$ 5. पुष्परन्ध्रौ, मु$_1$

**कलकण्ठः** – (विहस्य)

प्रणयकलहभारप्राप्तमौनग्रहाणां
अनुनयविधयोऽमी योषितां मानिनीनाम् ।
शपथचटुविशेषाः सन्त्यपि प्रेमकोप[1]-
प्रशमनपरमास्त्रं पादमूले प्रणामः ॥ 5 ॥

**कलविङ्कः** – (सहर्षं)

तदहं कालक्षेपासहः । परमास्त्रमेव प्रयोक्ष्ये ।

(इति ससम्भ्रमं पादमूले[2] प्रणमति ।)

**भ्रमरकः** – (सहासं, जनान्तिकं)

महुअरिए, किं अज्ज वामचरणेन ताडइस्सामि हदासम् ?

[मधुकरिके, किमद्य वामचरणेन ताडयिष्यामि हताशम् ?]

**मधुकरिका** – (जनान्तिकं)

मा एत्थ ताडेहि ! इदो ज्झत्ति सअणघरं णेदव्वो । जाव अह्मे उत्तरस्मिं कज्जे पवट्टामो ।

[माऽत्र ताडय । इतो झटिति शयनगृहं नेतव्यः । यावद्वयं उत्तरस्मिन् कार्ये प्रवर्तामहे ।]

**नवमालिका**– उट्ठेहि, उट्ठेहि, पसण्णा तुह पाणेसरी ।

[उत्तिष्ठोत्तिष्ठ, प्रसन्ना तव प्रणेश्वरी ।]

**कलविङ्कः** – (सहर्षमुत्थाय)

---

1. सन्ति किन्तु प्रको°, $मु_2$, $त_2$  2. चरण°, $मु_1$, $अ_1$

किं प्रसन्ना ? भगवति, साधीयानयमुपाय उपदिष्ठो युष्माभिः ।

**कलकण्ठः** – जामातः प्रौढप्रायो निशीथः । तद्गच्छ सवधूकः शयनगृहम् । आस्वाद्यतां अनेकप्रकारारब्धस्य तादृशो नयस्य पचेलिमं फलम् । यावदस्माभिरपि क्वचित् विश्राम्यते ।

(कलाविङ्कः सानन्दं झटित्युत्थाय भ्रमरकेण सह निष्क्रान्तः ।)

**मधुकरिका** –(सहर्षं)

महाभाअ, सुट्ठु एसो वञ्चिओ हदासो ।

(विहस्य)

पक्कमाहुलुङ्गसीअकामुएण साहामिएण फुलिङ्गो लद्धो । ता णिहुअं गच्छह्म उज्झाणघरं जस्सिं अविण्णादवुत्तन्दा एक्केव्व णिऊढा वट्टइ तवस्सिणी रमअन्तिआ ।

[(सहर्षं) महाभाग, सुष्ठ्वेव वञ्चितो हताशः । (विहस्य) पक्वमातुलुङ्गबीजकामुकेन शाखामृगेण स्फुलिङ्गो लब्धः । तस्मान्निभृतं गच्छाम उद्यानगृहं यस्मिन्नविज्ञातवृत्तान्ता एकैव निगूढा वर्तते तपस्विनी रमयन्तिका ।]

**नवमालिका** – णाहि णाहि एक्केव्व । णं कालिन्दी वि तहिं चिअ गआ ता अह्मे वि अविलम्बिअं गच्छह्म ।

नहि नहि एकैव। ननु कालिन्द्यपि तत्रैव गता। तस्मादावामपि अविलम्बितं गच्छावः।

(उत्थाय परिक्रामति)

**कलकण्ठः** –मधुकरिके अपि नावगतं रमयन्तिकया आत्मने-पथ्यधरस्य भ्रमरकस्य कलविङ्ककस्य च दाम्पत्यम्?

**मधुकरिका** – कहं णाम अवगच्छइ मुद्धहिअआ[1] जेण तं वि वश्चिअऊण मए तत्तारिसवेस[2]परिग्गहो पिअसहीकिओ भमरओ। ण वरं[3] एत्तिअं जाणइ। मल्लिआ उण सम्बरएण परिणीदेव्व मं वि कलविङ्कअस्स दावेउं[4] भअवई इह आअमिस्सदित्ति

[कथं नाम अवगच्छति मुग्धहृदया, येन तामपि वञ्चयित्वा मया तत्तादृशवेषपरिग्रहः प्रियसखी-कृतो भ्रमरकः न परमेतावन्मात्रं जानाति। मल्लिका पुनः शम्बरकेण परिणीतैव, मामपि कलविङ्ककाय दापयितुं भगवती इह आगमिष्यतीति।]

**कलकण्ठः** – (सानुकम्पं)

एषा मामिममुपगम्य नावगच्छे-
त्काषायग्रहणतिरोहितात्मवेषम्।

**नवमालिका** – (संस्कृतमाश्रित्य)

शोणाम्भोरुहवनरेणुदिग्धपक्षं
मारार्ता बत वरटेव राजहंसम् ॥ 6 ॥

**मधुकरिका** – ता एदेण चउस्सालदुवारेण णिग्गदुअ गच्छह्म।

---

1. मुद्धआ, $त_2$ 2. om वेस, $मु_1$ 3. केवलं, $मु_2$
4. समं समप्पिदुं [समं समर्पयितुं.] $मु_1$

[तस्मादेतेन चतुः शालद्वारेण निर्गत्य गच्छामः।]

(सर्वे निर्गमनं नाटयन्ति)

**कलकण्ठः** - (परितो विलोक्य)

अहो महानयं निशीथः । तथाहि -

एतद्व्योमवनीवराहवलयं विश्वैकवीरस्मर-
स्कन्धावारमदान्धसिन्धुरकुलं श्यामावधूकैशिकम् ।
चक्षुष्यञ्जनवस्तु धूकसदसां विश्लिष्टचक्राह्वयः
स्तोमान्तर्जरधूमकेतनमहाघूर्म्या तमःस्थीयते[1] ॥ 7 ॥

(निर्वर्ण्य)

उत्खातच्छिन्नसन्ध्यारुणकमलवनो व्योमकासारमध्यं
मन्ये मत्तो निशीथाह्वयवनमहिषो मंक्षु विक्षान्निमङ्क्षुः ।
तत्कालोद्विद्यमानैः सह तनुपृथुभिः तारकाबुद्बुदोघैः
तस्मादेवोज्जिहीते कलुषितभुवनं भीषणो ध्वान्तपङ्कः ॥ 8 ॥

(परिक्रामति)

अतिमनोहरोऽयं समयः । अत्र हि -

सञ्चरन्ति मृगनाभिचर्चिता मेचकाम्बरकृतावगुण्ठनाः ।
प्राणनाथमभिसर्तुमुद्यताः सुभ्रुवस्तिमिरदेवता इव ॥ 9 ॥

(विहस्य)

पश्य नवमालिके-

जाताः प्रासादपाली कनकवलभिकान्यस्तमाणिक्यदीप-
च्छायाविच्छर्दतुच्छीकृतविरलतमा ये निशीथान्धकाराः ।
तेऽमी स्फारीक्रियन्ते प्रतिविशिखमितः कान्तसङ्केतधावद्-
[2]वामभ्रूमुक्तनेत्रोत्पलतरलतरत्तारकामेचकिम्ना ॥ 10 ॥

---

1. स्फायते, $त_2$, $मु_2$ 2. मुग्ध, $मु_2$

**मधुकरिका** –एदे उज्झाणमज्झं आहदह्म ।

[एते उद्यानमध्यं आगता स्मः ।]

**नवमालिका** –(तिमिरातिशयं विभाव्य, संस्कृतमाश्रित्य)

अमुष्मिन्नुद्यानद्रुमकुहरनीरन्ध्रभरिते
तमः खण्डे[1] पिण्डीकृतबहुलकालायसघने ।
यतामद्यास्माकं कथमपि पुरोन्यस्तचरणं
[2]निमेषेऽप्युन्मेषे न हि न हि विशेषो नयनयोः ॥11 ॥

**कलकण्ठः** – (परितो विलोक्य, सस्मरणं[3])

हन्त,

यत्र यत्र घनवृन्दमांसले चारयामि नयनं तमस्यपि ।
दृश्यते विमलचन्द्रसुन्दरं तत्र तत्र रमयन्तिकामुखम् ॥ 12 ॥

**मधुकरिका** – एदं[4] पुरोरअणवद्धकुट्टिमं तं लआघरम् ।

[एतत् पुरोरत्नबद्धकुट्टिमं तत् लतागृहम् ।]

**कलकण्ठः** – (विलोक्य, सविस्मयं) पश्य–

मणिभिः प्रभाप्रतिहतप्रसरमभितो भवनमयोमयम् ।
प्राकारचक्रमिव भाति परिवेषितिमिरमण्डलम्[5] ॥

**मधुकरिका** – (सबाष्पं)

---

1. षण्डे, $मु_2$ 2. निमिषे, $मु_1$ 3. सविस्मयं, $मै_2$ 4. इदं, $के_1$

5. मणिभिः प्रभाप्रतिहतप्रसर
पश्याभितोऽधुना भवनम् ।
परिवेषितिमिरमण्डलमयोमयं
भाति सालचक्रमिव ॥ $मु_1$

एसा कुट्टिमेक्केदेसे परुण्ण वअणा उपविसइ कालिन्दीए समं पिअसही ।

[एषा कुट्टिमैकदेशे प्ररुदितवदना उपविशति कालिन्द्या समं प्रियसखी ।]

**कलकण्ठः** - (सदयं) इयं हि -

निश्वासानलविद्धदन्तवसना[1] नेत्राम्बुसिक्तस्तनी
हस्तन्यस्तकपोलदीनवदना हारैकभूषावती ।
विभ्राणांसपदेन तुङ्गजघनाविस्रंसिनीं वेणिकां
आस्ते स्थण्डिल एव पाण्डुमधुरक्षामालसैरङ्गकैः ॥13॥

**ववमालिका** - णं पिअसही दुव्विसह[2] कठोर-सोअमण्णुचिन्ता पज्जाउला लक्खिज्जइ । ता मण्णे भणिदं कालिन्दीए कलविङ्कअ परिणअ घडणव्वापुडा भअवदी एत्थ आअच्छइत्ति ।

[ननु प्रियसखी दुर्विषहकठोरशोकमन्युचिन्ता-पर्याकुला लक्ष्यते । तस्मात् मन्ये भणितं कालिन्द्या कलविङ्ककपरिणयघटनव्यापृता भगवती अत्र आगच्छतीति ।]

**कलकण्ठः**-क्षणमत्र तिमिर एव स्थित्वा सर्वं ज्ञास्यामः ।

(तथा कुर्वन्ति[3])

(ततः प्रविशति यथोद्दिष्टा रमयन्तिका कालिन्दी च ।)

---

1. °अनिल, $म_1$, $मै_1$, $मै_2$, $के_1$ 2. om दुविविसह, $मु_2$
3. करोति, $मु_1$

**रमयन्तिका** – (निश्वस्य, स्वगतं)

का एत्थ गई। हन्त एदं अदिजुउच्छिअं आरम्भं भअवदी कहं अणिमण्णेइ ?

(पुनर्निश्वस्य)

अहवा कीस भअवदी उवालम्भिज्जइ ? जं तस्स जीविदप्पदाइणो जणस्स दंसणादो पहुदि तेसु तेसु समएसु दुव्विसहेहिं मह मअणसन्दावेहिं तह णाम क्खिज्जन्ती पिअसही महुअरिआ वि मं एत्थ णिऊढं एक्कं णिक्खिविअ ज्झत्ति आअच्छामित्ति णिग्गआ सअं वि एत्थ अदि-जुउच्छिए कम्मम्मि पवट्टइ।

[(निश्वस्य, स्वगतं) काऽत्र गतिः ? हन्त, एतमतिजुगुप्सितमारम्भं भगवती कथमनुमन्यते ? (पुनर्निश्वस्य) अथवा कस्माद्भगवत्युपा-लभ्यते यत्तस्य जीवितप्रदायिनो जनस्य दर्शनात्प्रभृति तेषु तेषु समयेषु दुर्विषहैर्मम मदनसन्तापैस्तथा नाम खिद्यन्ती प्रियसखी मधुकरिकाऽपि मामत्र निगूढमेकां निक्षिप्य झटित्यागच्छामीति निर्गता स्वयमेवात्राति-जुगुप्सिते कर्मणि प्रवर्तते।]

**कालिन्दी** – सहि, रमअंतिए ! मा एत्थ पडिऊला होइ। णं भणामि भअवदीए आदेसं आअरेहित्ति।

---

1. om वि, $मु_1$

[सखि, रमयन्तिके ! माऽत्र प्रतिकूला भव । ननु भणामि भगवत्या आदेशं आचर इति ।]

(रमयन्तिका सान्तर्मन्युभारं अदत्तोत्तरैव तूष्णीमास्ते)

**कालिन्दी**–सहि सअं एव्व तुए हिअअंमि आलोअणिज्जं। पेच्छ। जइ एव्वं कीरइ इदोवरं वि मल्लिआए सह एक्कघरणिवासो भविस्सदि, ता ए क्खु एत्थ परिणएण किं वि विविइच्छिअम् ।

[सखि, स्वयमेव त्वया हृदये आलोचनीयम् । पश्य । यद्येवं क्रियते, इतः परमपि मल्लिकया सह एकगृहनिवासो भविष्यति, तथा खल्वत्र परिणयेन किमपि विचिकित्सितम् ।]

**रमयन्तिका** – (निश्वस्य)

कालिन्दि, कहं णाम विविइच्छउ तवस्सिनी मल्लिआ ? जदो तुह पडिऊला गअणवाणीप-माणेण गुरुअणेण सअं दिण्णा।

[कालिन्दि, कथं नाम विचिकित्सतु तपस्विनी मल्लिका ? यतस्तथा प्रतिकूलगगनवाणीप्रमाणेन गुरुजनेन स्वयं दत्ता ।]

**कालिन्दी** – णं तुमं गुरुणा रुद्दराएण दिण्णासि ।

[ननु त्वं गुरुणा रुद्ररुतेन दत्ताऽसि ।]

**रमयन्तिका** – किं एत्तिअमेत्तेण ? णहि तादेण अम्बा एव्व दिण्णह्मि। ते क्खु एदं अमङ्गलं

आअस्सिअ अणसणा वट्टन्दि । अहवा जाणं जीविअंमि अहिलासो ताण एव्व गुरुअणो भअवदी वा। ता अहं [1]भअवदीवअणपच्चक्खाण-कदत्थणादो पुढमं एव्व जीविअं परिच्चआमि ।

[किमेतावन्मात्रेण ? नहि तातेन अम्बया वा दत्ताऽस्मि । तौ खलु एतदमङ्गलमाकर्ण्य अनशनौ वर्तेते । अथवा येषां जीविते अभिलाषः, तेषामेव गुरुजनो भगवती वा । तस्मादहं भगवतीवचनप्रत्याख्यानक-दर्थनात्प्रथममेव जीवितं परित्यजामि ।]

(इत्युत्थातुमिच्छति)

**कालिन्दी** - (हस्तं गृहीत्वा)

सहि मा मा साहसमणुचिट्ठ ! अहं णिवारेमि भअवदिं । णहि भअवदीए तुवत्तो वि कलविङ्कओ अहिमदो । इदं तुए भणिदव्वं कीस परिक्खामधवलं अहिअसुन्दरं अ लक्खिज्जइ एदं[2] तुह सरीरम् ? अहं खु मण्णे कस्सिं वि पुण्णभाअणे जणे अणुरत्तं तुह माणसन्ति । सुणु मे पडिण्णम् । अज्ज एव्व खणे केणवि अविदिआघक्कूण तुमं णइस्सामि अ सूहवस्स[3] तस्स समीवम् । आणइस्सामि इह तुज्झ समीवे वा तं जणम् ।

---

1. मु₁ reads भअवदीए ; omits वअण॰ । 2. किं, मु₁
3. ॰ सुवल्लहस्स, मु₁

[(हस्तं गृहीत्वा) सखि, मा मा साहसमनुतिष्ठ। अहं निवारयामि भगवतीम् । न हि भगवत्याः त्वत्तोऽपि कलविङ्कोऽभिमतः । किं भणितव्यम्? कस्मात् परिक्षामधवलं अधिकसुन्दरं च लक्ष्यते एतत्तव शरीरम्? अहं खलु मन्ये कस्मिन्नपि पुण्यभाजने जनेऽनुरक्तं तव मानसमिति । शृणु मे प्रतिज्ञाम् । अद्यैव क्षणे केनाप्यविदिता गृहीत्वा त्वां नेष्यामि च सुभगस्य तस्य समीपम् । आनेष्यामि इह तव समीपे वा तं जनम् ।]

**नवमालिका** – साहु कालिन्दि, साहु ।

[साधु कालिन्दि, साधु ।]

(कलकण्ठः सादरं श्रृणोति)

**रमयन्तिका** – (ईषत्सोच्छ्वासं)

सहि, कालिन्दि, णं मुहा पडिण्णा भविस्ससि। जदो दुल्लहजणगोअरो मह अहिलासो ।

[सखि, कालिन्दि, ननु मुधाप्रतिज्ञा भविष्यसि। यतः दुर्लभजनगोचरो ममाभिलाषः ।]

**कालिन्दी** – (विहस्य)

मुद्धे ! कहं भअवदीए सिस्सा कालिन्दी वि मुहापडिण्णा । ता कहेहि को एसो कहिं णु दिट्ठो, कीरिसो वा अहिलासोत्ति ।

[मुग्धे ! कथं भगवत्याः शिष्या कालिन्दी अपि मुधाप्रतिज्ञा । तस्मात्कथय क एषः, कस्मिन् दृष्टः, कीदृशो वा अभिलाष इति ।]

**रमयन्तिका** – जइ एव्वं, सुणादु पिअसही अस्सिं एव्व सिसिरावसाणे मन्दमन्दसञ्चारिमलआणिलचलिअ माअन्दलआदंसिअपल्लवेसु पवुत्तेसु वसन्तदिअहेसु एक्कदा उण पुरन्दरपुरगोपुरसिहरपद्मराअकुम्भविब्भमेकठोर- तम्मचूलचूलापाडले[1] पुडमगिरिसिङ्गादो कण्ठमेत्तुच्चलिए कमलिणीवल्लहे कुन्तलेसरामच्चकुमारस्स मारुअस्स पिअसहो कलअण्ठो रच्छावहं आगदोत्ति इदो तदो पधावन्तीणं पडिघरं विलासिणीणं उच्झिअं- घरदीहिआसारसिआणुगअं चरणमणिमञ्जीरशिञ्जिदं आअण्णिअ अहं वि [2]अदिमेत्तकोलाहलुत्तरलहिअआ पारद्धं वि मण्डणं मज्झे परिच्चइअ महुअरिआ मुहाहिं सह सहीहिं वंशकरीरणीलेहिं इन्दणीलरअणेहिं[3] घडिअं कीलापासदं आरूढवदह्मि ।

[यद्येवं श्रृणोतु प्रियसखी । अस्मिन्नेव शिशिरावसाने मन्दमन्दसञ्चारिमलयानिलचलित- माकन्दलतादर्शितपल्लवेषु प्रवृत्तेषु वसन्तदिवसेषु एकदा पुनः पुरन्दरपुरगोपुरशिखरपद्मरागकुम्भविभ्रमे कठोरताम्रचूडचूडापाटले प्रथमगिरिश्रृङ्गात् कण्ठ- मात्रोच्चलिते कमलिनीवल्लभे कुन्तलेश्वरामात्य- कुमारस्य मारुतस्य प्रियसखः कलकण्ठो रथ्यापथमागत इति इतस्ततः प्रधावन्तीनां प्रतिगृहं विलासिनीनां उज्झितगृहदीर्घिकासारसिकाऽनुगतं चरणमणिमञ्जीरशिञ्जितमाकर्ण्य अहमपि अतिमात्र-

---

1.चूडालाववाआले, मु₁ 2. कौउअलु॰ [कौतूहलो॰], मु₂
3. मु₁ reads इन्दणीलेहिं ; omits रअणेहिं ।

कोलाहलोत्तरलहृदयाप्रारब्धमपि मण्डनं मध्ये परित्यज्य, मधुकरिकामुखाभिः सहसखीभिः वंशकरीरनीलैरिन्द्रनीलरत्नैर्घटितं क्रीडाप्रासादमारूढवत्यस्मि ।]

**कलकण्ठः** – नवमालिके, यस्मिन्नेव दिवसे प्रथममाश्रमे वयस्येन दृष्टा मल्लिका, तस्मिन्नेव समये[1] अयमप्युदन्तः[2] ।

स्फुरति तदिदमद्यानुग्रहं मे तदानीं
इयमलघुनितम्बा हस्तमालम्ब्य सख्याः ।
झणझणितविभूषा विस्मयोत्ताननेत्र-
द्युतिकुवलयिताभ्रं यत्तदा धावति स्म ॥ 14 ॥

**कालिन्दी** – तदो तदा ? [ततस्ततः ?]

**रमयन्तिका** –अह रच्छावहपसारिअ लोअणाए मउरकन्धरासुन्दरसिणिद्धवण्णस्स सरअचन्दमरीइजालधवलबालकलावस्स[3] गहिर[4] हेसिअहलहलिअमुहक्खलिअ खणखणाअंत कञ्चणकलिणस्स तुरङ्गस्स पिट्ठदेसे कणअचंपअकुसुमदलसारिच्छसरीरसोहो वलित्त हेमदण्डविअडधवलादवत्तलंछिओ मन्दमन्दहिन्दोलिअ सिदचामरपल्लवपवणच्चिअकुडिलकोमलसिणिद्दणीलकुन्तलमुद्धमुहचन्दमण्डली अहिणवारूढजोव्वणावड्ढिअगम्भीरदिट्ठिबाअ विइण्ण-

---

1. दिवसे, $मु_2$, $त_2$, $के_2$
2. add स्मित्वा, $म_1$ ; add स्मृत्वा, $मु_2$, $त_2$ $मै_4$
3. om बाल, $मु_1$
4. संकंपि, $मु_1$

विअसिअकमलपल्लअवणो विसट्टवउललवङ्गकप्पूर-तक्कोलसुरहिणीसासपरिमललुब्भत्तिभिङ्गझङ्कारमुहर-पुरोभाओ मुत्तिमन्तो विअ सुरहिमासो। अहंपुव्विआ णिविडिअ सअलकुसुमउरसुन्दरीसविब्भमविह्म-आपुंखिअकडक्खन्दोट्टमालिअब्भच्चिअसव्वङ्गो परिमिदे एव्व परिअणेहिं परिउदो दिट्ठो मए कलअण्ठो।

[अथ रथ्यापथप्रसारितलोचनया मयूरकन्धरा-सुन्दरस्निग्धवर्णस्य शरच्चन्द्रमरीचिजालधवलबाल-कलापस्य गभीरहेषितहलहलितमुखरस्खलितखण-खणायमानकाञ्चनखलीनस्य तुरङ्गमस्य पृष्ठदेशे कनकचम्पककुसुमदलसदृशशरीरशोभः दलितहेम-दण्डविकटधवलातपत्रलाञ्छितः मन्दमन्दान्दोलित-सितचामरपल्लवपवननर्तितकुटिलकोमलस्निग्ध-नीलकुन्तल-मुग्धमुखचन्द्रमण्डलः अभिनवारूढ-यौवनावष्टम्भगम्भीरदृष्टिपातविकीर्णविकसित-कमलपल्लववनः, विस्रस्तवकुललवङ्गकर्पूरतक्कोल-सुरभिनिश्वासपरिमललुभ्यद्भृङ्गझङ्कारमुखरपुरोभागः मूर्तिमानिव सुरभिमासः अहंपूर्विकानिपतित-सकलकुसुमपुरसुन्दरीसविभ्रमविस्मयपुञ्जित-कटाक्षोत्पलमालिकाभ्यर्चितसर्वाङ्गः परिमितैरेव परिजनैः परिवृतः दृष्टो मया कलकण्टः।]

**कालिन्दी** - तदो तदो ? [ततस्ततः ?]

---

1. लुब्भन्त, मु$_1$; लम्भत, म$_1$
2. णिहिलङ्गो, मु$_1$

**रमयन्तिका** – तदो अ रूवादिसअदंसणविह्मउत्तम्भिअ-णिप्पन्दपह्मलावेहिं लोअणेहिं सुइरं[1] पेच्छन्ती सव्वङ्गिअ[2] पुलउब्भेद कण्डइअ तणुलआ जाव सिअह्मि दाव मं वि अणापुच्छिअ णिद्धाविअं कञ्चणरम्भागब्भपल्लवगोरे तस्स अङ्गे गाढलग्गं हिअअं अज्ज वि ण णिवट्टइ ।

[ततश्च रूपातिशयदर्शनविस्मयोत्तम्भितनिषपन्द-पक्ष्मलाभ्यां लोचनाभ्यां सुचिरं पश्यन्ती सर्वाङ्गीणपुलकोद्भेदकण्ठकिततनुलता, यावत् स्थिताऽस्मि, तावत् मां अनापृच्छ्य निर्धावितं काञ्चनरम्भागर्भपल्लवगौरे तस्याङ्गे गाढलग्नं हृदयं अद्यापि न निवर्तते ।]

**कालिन्दी**– सहि उइए एव्व ठले लग्गं तुह हिअअम् ।

[सखि, उचिते एव स्थले लग्नं तव हृदयम् ।]

**कलकण्ठः**–नवमालिके, श्रृणु तावत् तत्कालोद्भव-मद्भुतम् ।

अस्याः[3] [4]सुविभ्रमतरङ्गिततारकाभा
तापिञ्छितैस्तत इतः स्थगिता कटाक्षैः
सा ताण्डवोद्धतशिखावलपिच्छगुच्छ-
च्छन्नेव तत्क्षणमलक्ष्यत राजरथ्या ॥ 15 ॥

---

1. सउरं, मु$_1$ 2. संवट्टिअ, मु$_1$
3. तस्याः, मु$_1$; यस्याः, मै$_2$ 4. स°, मु$_1$

अपि च तस्मिन् समये,

कुप्यत्प्रलम्बपरिपन्थिहलाग्रपात
क्षुभ्यत्कलिन्दतनयालहरीगभीरे ।
भुग्नभ्रुवो नयनकान्तिनदीप्रवाहे
मज्जन्नगाश्चिरतरं मकरायितानि ॥16॥

**कालिन्दी** - तदो तदो ? [ततस्ततः ?]

**रमयन्तिका** -तदो अ सो धवलचामरकलावंतरिअं [1]उप्पडन्तमहुलिहमण्डलपक्खपालिपरिक्खित्तकण-आरविन्दसुन्दरं वअणं सविब्भमं ईसि उत्ताणं-कदुअ विहडन्तसहस्सपत्तरुइरेहिं सविला-सुव्वेल्लिअभुमआतोरणमण्डणेहिं[2] पेम्ममअ-मुउलन्तपेरन्तेहिं णअणेहिं मं संभावअन्तो एव्व करकमलाअड्ढिअखलिणावट्ठम्भमन्दमन्दीकिअ-तुरङ्गमगई चिरेण तं रच्छं अदिवाहिदवन्दो ।

[ततश्च सः धवलचामरकलापान्तरितं उत्पतन् मधुलिहमण्डलपक्षपालिपरिक्षिप्तकनकारविन्दसुन्दरं वदनं सविभ्रममीषदुत्तानीकृत्य विघटमानसह-स्रपत्ररुचिराभ्यां सविलासोद्वेलितभ्रूमयतोरण-मण्डलाभ्यां प्रेममयमुकुलत्पर्यन्ताभ्यां नयनाभ्यां मां सम्भावयन्नेव करकमलाकृष्टखलीनावष्टम्भ-मन्दमन्दीकृततुरङ्गमगतिश्चिरेण तां रथ्यामति-वाहितवान् ।]

---

1. हंस; मु$_1$
2. लमआ, मु$_1$; मु$_2$ reads भ्रू in the place of भुमआ ।

**कलकण्ठः**- सत्यमुक्तं मधुरवाण्या चिरेणातिवाहितवानिति। मधुकरिके, ननु त्वया विज्ञायत एवैतत् ।

द्राघीयसीभिरखिलाङ्गदृढार्पिताभि-
रस्याः[1] कटाक्षमयपाशपरम्पराभिः ।
पश्चाद्विकृष्ट इव तत्र पदे पदेऽहं
कृच्छ्रादलङ्घ्यमनङ्गहतः प्रतोलीम् ॥ 17॥

[2]**कालिन्दी** - तदो तदो ? [ततस्ततः ?]

**रमयन्तिका** - तदोअ तिरोहिए णअणपहाओ तस्सिं कहं वि पडिसंहिअलोअणा पेच्छामि पासपरिवट्टिणं पअण्डभुअदण्ड-कुण्डलिअसरासणं भअवन्तं मअरलंचणम् ।

[ततश्च तिरोहिते नयनपथात्, तस्मिन् कथमपि प्रतिसंहृतलोचना पश्यामि पार्श्वपरिवर्तिनं प्रचण्डभुज-दण्डकुण्डलितशरासनं भगवन्तं मकरलाञ्छनम् ।]

**कलकण्ठः** - मधुकरिके, कथं द्वाविमौ स्तः ? ततः प्रभृति पश्य-

मुहुरलिवलयज्यामामृशन्नङ्गुलीभि-
र्धनुषि मधुविषार्द्रान् सन्दधानः पृषत्कान् ।
मम[3] वपुषि शरव्ये [4]दर्शयत्यस्त्रशिक्षां
इह[5] चरति सनीडोऽन्योऽमुया पुष्पधन्वा ॥18॥

---

1. तस्याः, मु$_2$

2. मु$_1$ omits the following dialogue till मअरलंचणम्, see next page.

3. इह, मु$_2$ ; इभ॰, त$_2$, के$_1$, के$_2$, अ$_1$

4. दर्शयन्, अ$_1$, के$_2$     5. मम, मु$_2$, त$_2$, अ$_1$, के$_1$, के$_2$

**मधुकरिका** - महाभाअ, णहि णहि दुवे एव्व । पडिपुरिसं[1] एक्केक्को मणोभवो ।

[महाभाग, नहि नहि, द्वावेव । प्रतिपुरुषं एकैकः मनोभवः ।।]

**कालिन्दी** - सहि, रन्धप्पहारणिउणो खु मअणो । तदो तदो ?

[सखि, रन्ध्रप्रहारनिपुणः खलु मदनः । ततस्ततः?]

**रमयन्तिका** -तदो अ दीहरदीहरणिस्सासपवणगलि-उत्तरिज्जपाअददिट्ठकुअट्ठलपरूढकठोरपुलअंकुर णिण्णिद-गाढमअणाहिसङ्गविहसिअपि[2]असहअरिमण्डलाढढत्त-परोप्परमुहावलोअ वक्कभासिअवड्ढन्तलज्जासूआ-वइअरसङ्कुलहिअआ कहं कहं वि पासादसिहरादो अवरुहिअ, तदो पहुदि कालिन्दि, ण जाणामि वाहाए वण्णिउं केवलं अप्पमेत्तसंवेअणिज्जामत्तण्ड[3]-सहस्ससंपाददुव्विसहसन्दावमिलाअन्त हिअअकुसुमा णिक्कारणणिट्ठुरमअरद्धअ पडिभअ सरपडणचइअचइअ णिग्गन्तरजीविअणिरोहणिच्छसण्णिहिदणिउणसहीकिच्चि वावुढपच्चासाधारिअसरीरा तह तह सबाहणअण-परिअणतुरिअणिव्वट्टिअ विविहसीअलोवचारदुउणिअ तणुज्जरा णिप्फलं पाणिमि । जं उण सोमसरसि तक्का-लुब्भिज्जन्तमअरोस दुरुपसप्परस्स कुलतरुसङ्गडण-

---

1. °माणुसं, $मु_1$ 2. वि अङ्ग°, $मु_2$

3. add पअण्डसहासकिरण, $मु_2$, $त_2$

झडझडाअंतदन्दतम्भोलिसिहस्स दन्दावलस्स सुण्डा-दण्डवलआदो रक्खिदह्मि । तं उण तुह्माणं वि पच्चक्खं एव्व । सहि ण जाणामि किं तस्सिं समए एदस्स णिसंसस्स वाराणासीपहिउत्तणम् । जस्स मं भअवदी दाउं पवट्टइ ।

(सानुकम्पं)

कालिन्दी, कहं[1] णाम, मारुएक्कपराअणा जीविआ मल्लिआ[2] भअवदीए संबरअस्स दाविदा । जा तस्स दुट्ठुपिअस्स मुहादो तारिसं विपत्तिं[3] सुणिअ, हा णाह मारुएत्ति कलुणकलुणं वाहरन्दी दुहणताडिएव वलिअं मुच्छिआ । अविअ, तक्कालसण्णिहिदेण पुण्णचन्दसुन्दरेण तेण महापुरुसेण परिरद्धेव्व पडिबुद्धा अ । अहवा चिट्ठदु एदं । पुणो वि पत्थुदं सुणादु पिअसही। अह देण दुईअ दंसणेण घिअवरिसेण विअ पावओ पज्जलिओ मह मअणाअंको । सङ्कप्पेसु अ भिण्णंजणणील-मंसलेअतिमिरे[4] वञ्चिअपरिअणा लआघरेसु एक्कीं एव्व पडिवालअंतीं मं सो वि वेसन्तरतिरोहिदो अवहुअ-वरिअणो हरिसाणुराअ पूरिदेहिं कण्णजाह जङ्घालेहिं णेत्तेहिं पिबन्तो वि अ आअदुअ पेम्मगग्गदेण सरेण किं वि किं वि पत्थेदि । अह दंसणमेत्त एव्व[5] पुढमजलहरवरिसपरोहन्तकदम्बकुम्मलकठोर-रोमञ्चकञ्चुअत्थइअ सअलङ्गं[6] अणिच्छन्तिं वि मं सो

1. तह, के$_1$ 2. add कहं णु, म$_2$, के$_1$ 3. पवुत्तिं, मु$_1$
4. रअणी, मु$_2$, मै$_1$ 5. च्चिअ, मु$_1$ 6. सअलङ्गीं, मु$_1$

बलामोडिधुत्तो विसालमंसलवच्छट्ठलणिमज्जिअत्थ-णाभोअं परिरम्भिअ सविब्भमकोमलकअग्ग-हुत्ताणिअलज्जावणअमंमुहणिवेसिअ सुरहिवअणार-विन्दो सदअदिण्णमुद्धदसणक्खदं चुम्बइ दन्द-वअणम् । देइ अ मे ईसिम्मुउलन्तलोअणावङ्गं[1] अप्पणो विद्दुमभङ्गदम्बं अमुअणीसन्द महुरं अहरबिम्म् । सहि इदोवरं ण पारेमि लज्जाए कहिदुं[2] जं सो किदवो सअं एव्व विगलन्तणीविबन्धणिरोह-दिढणिहिअपाणिजुअलं पलाइदुकामं वि मं गाढ-भुअअन्तेण[3] परिरब्भिअ किं वि अविणअं अहिलसइ । अह तक्खणाणुभवपरमाणन्द[4]मुच्छामुसिअकरणा पडि-बुज्झिअ पेच्छामि पुणो वि तस्सिं[5] एव्व सहीअणविरइए कुसुमसअणिज्जो कुसुमसरसरतप्पे विअ सआणं पुण्णसुण्णं अत्ताणम् ।

[ततश्च दीर्घदीर्घनिश्वासपवनगलितोत्तरीय-प्रकटदृष्टकुचस्थलप्ररूढकठोरपुलकाङ्कुरनिर्णीतगाढ-मदनाभिषङ्गविहसितप्रियसहचरीमण्डलारब्धपरस्पर-मुखावलोकवक्रभाषितवर्धमानलज्जासूयाव्यतिकरसङ्कुलहृदया कथंकथमपि प्रासादशिखरादवरुह्य, ततः प्रभृति कालिन्दि, न जानामि वाचा वर्णयितुम् । केवल-मात्ममात्रसंवेदनीयमार्तण्डसहस्रसंपातदुर्विषहसन्ताप-म्लायद्हृदयकुसुमा निष्कारणनिष्ठुरमकरध्वज-

1. लोअणावङ्गी, मु$_1$ 2. भणिउं, मु$_2$ 3. om ण, मु$_1$
4. मु$_1$ **omits** °भवपरमाणन्दः 5. om तस्सिं, मु$_1$

प्रतिभयशरपतनचकितचकितनिर्गत्यमानजीवितनिरोध-नित्यसन्निहितनिपुणसखीकृत्यव्यापृतप्रत्याशाधारितशरीरा, तथा तथा सबाष्पनयनपरिजनत्वरित-निर्वर्तितविविधशीतलोपचारद्विगुणिततनुज्वरा निष्फलं प्राणिमि। यत्पुनः सोमसरसि तत्कालोद्भिद्य-मानमदरोषदुरुपसर्पस्य कुलतरुसङ्घटनझड-झडायद्दन्तदम्भोलिशिखरस्य दन्तावलस्य शुण्डा-दण्डवलयाद्रक्षिताऽस्मि। तत्पुनर्युष्माकमपि प्रत्यक्ष-मेव। सखि, न जानामि किं तस्मिन् समये एतस्य नृशंसस्य वाराणसीपथिकत्वम्। यस्मै मां भगवती दातुं प्रवर्तते। (सानुकम्पं) कालिन्दि, कथं नाम मारुतैकपरायणजीविता मल्लिका भगवत्या शम्बरकाय दापिता। या तस्य दुष्टपथिकस्य मुखात् तादृशीं विपत्तिं श्रुत्वा, "हा नाथ मारुत!" इति करुणकरुणं व्याहरन्ती द्रुघणताडितेव बलवन्मूर्च्छिता। अपि च तत्कालसन्निहितेन पूर्णचन्द्रसुन्दरेण तेन महापुरुषेण परिरब्धैव प्रबुद्धा च। अथवा तिष्ठत्वेतत्। पुनरपि प्रस्तुतं श्रृणोतु प्रियसखी। अथ तेन द्वितीयदर्शनेन घृतवर्षेणैव पावकः प्रज्वलितो मम मदनातङ्कः। सङ्कल्पेषु च भिन्नाञ्जननीलमांसलेव तिमिरे वञ्चितपरिजना लतागृहेष्वेकामेव प्रतिपालयन्तीं मां सोऽपि वेषान्तरतिरोहितः अपह्नुतपरिजनः हर्षानुरागपूरिताभ्यां कर्णमूलजङ्घालाभ्यां नेत्राभ्यां पिबन्निवागत्य प्रेमगद्गदेन स्वरेण किमपि किमपि प्रार्थयते। अथ दर्शनमात्र एव प्रथमजलधरवर्ष-

प्रोहत्कदम्बकुड्मलकठोररोमाञ्चकञ्चुकस्थगितसकलाङ्गीं अनिच्छन्तीमपि मां स बलात्कारधूर्तः विशालमांसलवक्षःस्थलनिमज्जितस्तनाभोगां परिरभ्य सविभ्रमकोमलकर-ग्रहोत्तानितलज्जावनतमन्मुखनिवेशितसुरभिवदनारविन्दः सदयदत्तमुग्धदशनक्षतं चुम्बति दन्तवसनम् । ददाति च मह्यं ईषन्मुकुलल्लोचनापाङ्गं आत्मनो विद्रुमभङ्गताम्रं अमृतनिष्यन्दमधुरमधरबिम्बम् । सखि, इतः परं न पारयामि लज्जया भणितुम् । यत्पुनरस्स कितवः स्वयमेव विगलन्नीवीबन्धनिरोधदृढनिहितपाणियुगलां पलायितु-कामामपि मां गाढभुजयन्त्रेण परिरभ्य किमपि अविनयमभिलषति । अथ तत्क्षणानुभूतपरमानन्द मूर्च्छामुषितकरणा प्रतिबुध्य पश्यामि पुनरपि तस्मिन्नेव सखीजनविरचिते कुसुमशयनीये कुसुमशरशरतल्पे इव शयानं पुण्यशून्यमात्मानम् । (इति बाष्पं नाटयति।)]

**कालिन्दी** –सहि, रमअंतिए, जइ संकप्पेसु विअ वेसंदरतिरोहिदो अज्ज वि आअच्छइ पाणेसरो कलअण्ठो तदो किं णु करिस्ससि ?

[सखि, रमयन्तिके, यदि सङ्कल्पेष्विव वेषान्तरतिरोहितो अद्याप्यागच्छति प्रणेश्वरो कलकण्ठः, ततः किं करिष्यसि ? ]

**रमयन्तिका** – (निश्वस्य)

अइ आसासणसीले कीस मं पदारेसि ? एव्वं खु तुह्मेहिं मल्लिआ वि बहुसो पदारिदा ।

[अयि आश्वासनशीले, कस्मान्मां प्रतारयसि ! एवं खलु युष्माभिः मल्लिकाऽपि बहुशः प्रतारिता ।]

**कालिन्दी** – (ससंभ्रमं)

रमअंतिए मा एव्वं भण । सवामि भअवदीए चरणेहिं एसाहं अज्जोव्व रत्तिम्मि तुमं कलअण्ठेण[1] सङ्घडइस्सं । ता उट्टेहि, गच्छह्म जाव भअवदी णापढइ[2] ।

[रमयन्तिके, मैवं भण । शपामि भगवत्याः चरणाभ्याम् । एषाऽहं अद्यैव रात्र्यां त्वां कलकण्ठेन सङ्घटयिष्यामि । तस्मादुत्तिष्ठ, गच्छावः यावद्भगवती नापतति ।]

**रमयन्तिका** – (स्वगतं)

जं होदि, तं होदु । पुडमं इमादो सङ्कडादो णिग्गच्छामि ।

(प्रकाशं)

सहि कालिन्दि, जइ एव्वं एसा अहं तुह वसे वट्टामि ।

[(स्वगतं) यद्भवति तद्भवतु । प्रथममस्मात्सङ्कटान्निर्गच्छामि । (प्रकाशं) सखि कालिन्दि, यद्येवमेषाऽहं तव वशे वर्ते ।]

**कालिन्दी** – ता एदेण उपवणद्दुवारेण णिग्गदुअ गच्छह्म ।

[तस्मादेतेन उपवनद्वारेण निर्गत्य गच्छावः ।]

---

1. add सह, मु₂ 2. णाणुबन्धइ, मु₁

**मधुकरिका** – (सहसोपसृत्य)

सहि, कहिं णु गमिस्ससि ? आगदा खु भअवई एत्थ तुह परिसे[1] ।

[सखि, कुत्र गमिष्यसि ? आगता खलु भगवती एतत्तव परिसरे ।]

[2](कलकण्ठः नवमालिकया सह उपसर्पति ।)

**रमयन्तिका** – (विलोक्य, सकम्पं)

भअवइ, पाहि मं अणाहम् ।

(इति चरणयोर्निपत्य, परिरभ्य, सरोमाञ्चं, स्वगतं)

कहं एसो एव्वं सव्वङ्गसुहावइतओ अण्णारिसो भअवईए परिसो ! (साशङ्कं)

अह्महे वच्चस्सिं थणा वि ण दीसन्दि ।

[भगवति, पाहि मां अनाथम् । (इति चरणयोर्निपत्य, परिरभ्य, सरोमाञ्चं, स्वगतं) कथमेष एवं सर्वाङ्गसुधावलिप्तको अन्यादृशो भगवत्याः स्पर्शः! (साशङ्कं) अहो वक्षसि स्तनावपि न दृश्यते ! ]

(इति झटिति ससाध्वसमपक्रामति । कलकण्ठः उत्तरीयकाषायपटमवक्षिप्य हस्तमवलम्बते ।)

**रमयन्तिका** – (विलोक्य, सहर्षसाध्वसं, स्वगतं)

---

1. om. एत्थ तुह परिसे, $मु_2$, $त_2$, $त_1$, $मै_1$. $अ_1$
2. $मु_1$ omits the following lines till परिसो

अह्महे ! महाभाओ कलअण्ठो !

(सासूयमिव, प्रकाशं)

महअरिए, काहें एत्थ भअवदी ?

[अहो ! महाभागः कलकण्ठः ! (सासूयमिव, प्रकाशं) मधुकरिके, कुत्रात्र भगवती ?]

**कलकण्ठः** – (सस्मितं)[1]

चरणकमलदासस्त्वेष[2] सङ्कल्पसङ्गे
सुमुखि यमभिधत्से त्वं बलात्कारधूर्तम् ।
प्रसभविधृततर्षः[3] पीडयत्यात्मनैव
द्विरद इव सरोजं पाणिमापाटलं ते ॥ 19 ॥

**मधुकरिका** – का एत्थ बलामोडी ? णं पुडमं एव्व तुए कुञ्जरहत्थादो अक्खिविअ रक्खन्तेण अप्पवसे कअं सरीरं । हिअअं तु पुढमदंसणे एअए एव्व दिण्णम्[4] ।

[कोऽत्र बलात्कारः ? ननु प्रथममेव त्वया कुञ्जरहस्तादाक्षिप्य रक्षता आत्मवशे कृतं शरीरम् । हृदयं तु प्रथमदर्शने एतस्यैव दत्तम् ।]

(रमयन्तिका वैलक्ष्यं नाटयति)

---

1. om. सस्मितं, मु$_1$
2. सैष, मु$_2$, त$_2$
3. प्रसभविधृतधाष्ट्यः, मु, अ$_1$
4. अप्पावसो विओ एव्व तह पुदमदंसणे एदाए एव्व दिण्णो अप्पा ।, मु$_1$

**कलकण्ठः** – (सानन्दं)

अहो प्रसन्नो मकरध्वजश्चिरा-
दहो तपो मे स्वयमेव पच्यते ।
अहो जनुष्मत्वमिदं न निष्फलं
लभे यदेनां ललनामतल्लिकाम् ॥ 20॥

**रमयन्तिका** – (सबाष्पं)

णोमालिए, कहं णु तुह्मेहिं सम्बरअस्स दिण्णा पिअसही मल्लिका ।

[नवमालिके, कथं तु युष्माभिः शम्बरकाय दत्ता प्रियसखी मल्लिका !]

**नवमालिका** – मुद्धे मा मा भयासि ।
(कर्णे) एव्वं विअ ।

[मुग्धे मा मा बिभेहि । (कर्णे) एवमिव ।]

**रमयन्तिका** – (सहर्षं)

पिअं णो, पिअं णो । किं दुवे वि वेसमेत्तेण वञ्चिआ हदासा ।

[प्रियं नः । प्रियं नः । किं द्वावपि वेषमात्रेण वञ्चितौ हताशौ ।]

(इति नवमालिकामालिङ्गति)

(नेपथ्ये)

आः दुरात्मन् ! मिथ्यागगनभाषितप्रयोगकृत-कात्यायनीहेलननृशंस शम्बरकपशो ! अयमद्य विशस्यसे ।

(सर्वे सहर्षमाकर्णयन्ति । पुनर्नेपथ्ये)

हा हतोऽस्मि मन्दभाग्यः । हन्त मुधाकामुकेन मया मल्लिकेति कश्चन भूत एव परिणीतः ।

**कलकण्ठः** – हन्त, प्रवृत्तमेव माकन्दनाम्ना महापुरुषेण शम्बरकस्य निशुम्भनम् ।

(पुनर्नेपथ्ये)

हा भगवति मन्दाकिनि, मोचयस्व माम् । भिद्यन्त इव गात्राणि ।

**कलकण्ठः** – हताश क्वात्र भगवती !

(पुनर्नेपथ्ये)

भगवति, परित्रायस्व, भूयोऽप्यनर्घाणि काषायाणि दास्यामि ।

**कलकण्ठः** – (विहस्य)

मूर्ख, दत्तस्य काषायस्य फलमेतत् ।

(पुनर्नेपथ्ये) – आश्चर्यं [1]!

व्रीडात्केलिगृहं कथञ्चन वधूर्याताऽद्य या सा पतिं
खट्वाशृङ्खलया निबध्य पदयोः कृष्ट्वा नभस्युत्थिता ।
कष्टं कष्टममुं तमालविटपे बद्ध्वा तिरोऽभूत् क्षणा-
जामातायमधोमुखो बत रुदन् वेतालवल्लम्बते ॥ 21॥

**सर्वाः** – (सहर्षं)

1. om आश्चर्यं, मु1

अणुहोदु हदासो अत्तणो दुब्बुद्धीए[1] फलम् ।

[अनुभवतु हताशः आत्मनः दुर्बुद्धेः फलम् ।]

**कलकण्ठः** – [2]पश्य भगवत्याः प्रभावम् । प्रागप्यनेन तमाल विटप एव मिथ्यागगनभाषितम् । अद्य फलमपि तत्रैवानुभूयतेऽनेनैव ।

(नेपथ्ये कलकलः)

**कलकण्ठः**[3] – हन्त, सर्वतो हाहाकारमुखरं अमात्य-विष्णुरातभवनम् ।

(पुनर्नेपथ्ये)

भो भो कञ्चुकिनस्तथा परिजना मा भैष्ट माक्रन्दत
व्यक्तास्यो न पिशाच एष मनुजान्मुक्त्वा[4] रटन्[5] धावति ।
मष्यालिप्तवपुर्विभिन्नवदनो व्यामुक्तकेशोऽन्वहं
जामाता कलविङ्कोऽपि विकृतं निर्याति शय्यागृहात् ॥ 22॥

**सर्वाः** – साहु भमरअ, साहु ।

[साधु भ्रमरक, साधु ।]

(प्रविश्य ससंभ्रमो भ्रमरकः ।)

**भ्रमरकः** – (सानन्दं, विलोक्य)

हन्त लद्धा णाहकलअण्ठेण वि रमअंतिआ !

[हन्त लब्धा नाथकलकण्ठेनापि रमयन्तिका ।]

---

1. पारद्धीए, [पापर्द्धेः], मु$_2$; रागद्धंए, [रागर्द्धायाः], त$_2$
2. मु$_1$ omits from पश्य to कलकण्ठः – see next page, for 1
3. loc. cit. 4. अत्तुं, मु$_2$ 5. रुदन् , मु$_2$, त$_2$

(उपसर्पति)

**सर्वाः** – (विलोक्य, सहर्षं)

एहि भमरअ, तुरिअं कहेहि ।

[एहि भ्रमरक, त्वरितं कथय ।]

**कलकण्ठः** – (सस्मितं)

भ्रमरक, किमनुष्ठितकार्यः प्रतिनिवृत्तोऽसि ?

**भ्रमरकः** – णाह, को णाम अणणुट्ठिअकज्जो णिवट्टइ णाहस्स परिअणेसु ।

[नाथ को नाम अननुष्ठितकार्यो निवर्तते नाथस्य परिजनेषु[1]?]

**कलकण्ठः** – तत्कथय, किमत्र क्रिया[2] इति ।

**भ्रमरकः** – तदो सज्जघरं गदुअ भूयो वि कलहणडण-वावुदो पुणो पुणो चलणदासस्स तस्स तक्खण-सुमरिअविविहापराहसमुज्जिम्मिअरोसणिद्धुरचिविड-ताडणणिब्भिण्णा सव्वङ्गं पुडमं एव्व महुअरिआए मञ्जवेरन्तणिहिदं मसिभाण्डं घेक्कूण असिहित्त-वन्दोह्मि । किं बहुणा । तह णिक्कासिदो सो हदासो । जहणं पिसल्लित्ति लोआ परिहरन्दि[3] ।

[ततः शय्यागृहं गत्वा भूयोऽपि कलहनटनव्यापृतः पुनः पुनः चरणदासस्य तस्य तत्क्षणस्मृत-

1. परिजनः, अ$_1$ 2. कथा, म$_2$

3. परिहसन्दि [परिहसन्ति], मु$_2$

विविधापराधविजृम्भितरोषनिष्ठुरचपेटाताडन-निर्भिन्नसर्वाङ्गं प्रथममेव मधुकरिकाया मञ्चपर्यन्तनिहितं मषीभाण्डं गृहीत्वा अभिषिक्तवानस्मि । किं बहुना । तथा निष्कासितः स हताशः यथैनं पिशाच इति लोकाः परिहरन्ति ।]

**सर्वाः** – (विहस्य)

अण्णहा वितं पिसल्लित्ति परिहरन्दि[1] एव्व ।

[अन्यथाऽपि तं पिशाच इति परिहरन्त्येव ।]

**भ्रमरकः** –अह अद्धमुक्कणिद्दाणं चेडअवरिसवराणं[2] पवुट्टे कोलाहले अहं वि पसमिअपईवो तिमिरे [3]णिग्गदुअ तक्खणं तमाललम्बअं सम्बरअ-कंदाणन्दिअकण्णो[4] ज्झत्ति आअदह्मि ।

[अथ अर्धमुक्तनिद्राणां चेटकवर्षवराणां प्रवृत्ते कोलाहले अहमपि प्रशमितप्रदीपः तिमिरे निर्गत्य तत्क्षणं तमाललम्बितं शम्बरका-क्रन्दानन्दितकर्णो झटित्यागतोऽस्मि । ]

**कलकण्ठः** – साधु भ्रमरक, साधु । यदयूयुजः शत्रू[5]न्निकारेण यच्चाप्यज्ञात[6] एवागतोऽसि ।

---

1.परिहसन्दि [परिहसन्ति], मु$_2$ 2. वद्द्याणं, मु$_1$ 3. तिरो॰, मु$_1$
4.सम्बरअं किं दाणिं ति णिन्दिअकण्णे, मु$_1$
5. शत्रुं, मु$_2$, त$_2$, के$_2$ 6.॰अविज्ञात, के$_2$

**मधुकरिका** – महाभाअ, इदोवरं अह्माणं अण्णेसणं सम्भविस्सदि ता एदेण उपवणदुवारेण णिग्गदुअ मल्लिआसमीवं एव गच्छह्म ।

[महाभाग, इतः परमस्माकमन्वेषणं संभविष्यति। तस्मादेतेन उपवनद्वारेण निर्गत्य मल्लिकासमीपमेव गच्छामः ।]

**कलकण्ठः** – तद्दर्शय मार्गम् ।

**मधुकरिका** – इदो इदो । [इतः इतः ।]

(सर्वे निर्गमनं[1] नाटयन्ति ।)

**कलकण्ठः** – (स्पर्शसुखमनुभूय)

एष क्रीडान्तताम्यत्कुसुमपुरवधूवक्त्रसौरभ्यबन्धुः
मुग्धं निद्राजडानां रसितमनुसरो द्राघयन् सारसानाम् ।
आवात्यङ्गानुकूलश्चकितविचकिलश्रेणिगन्धानुधाव-
ल्लोलम्बोद्धुष्यमाणस्मरजयबिरुदाडम्बरो मातरिश्वा ॥23॥

(इति निष्क्रान्ताः सर्वे)

उद्दण्डं रङ्गनाथः सुतमलभत यं रङ्गदेवी तथाम्बा
त्रैविद्येशो महर्षिनिरवधिमहिमा यद्धिते जागरूकः
तस्य श्रीविक्रमाज्ञाबहुमतिरचिते मल्लिकामारुतेऽस्मि-
न्निर्वृत्तः[2] सप्तमो[3]ऽभूत्प्रकरणतिलके निष्कलङ्कोऽयमङ्कः ॥[4]



---

1. निर्गमं, मु$_1$ 2. सम्पूर्णः, त$_2$, मै$_1$, मै$_2$, त$_1$ 3. °ऽपि, त$_2$
4. मु$_1$ omits the verse; reads इति मल्लिकामारुते सप्तमोऽङ्कः ।

## ॥ अष्टमोऽङ्कः ॥

(ततः प्रविशति मन्दाकिनी माकन्दश्च)

**मन्दाकिनी** – ततस्ततः ?

**माकन्दः**:– ततश्च तं तमालविटपालम्बं अधोमुखं बद्धवा तिरोभूयागतोऽस्मि ।

**मन्दाकिनी** – (विहस्य)

वत्स समुचितमनुष्ठितम् ।

(सहर्षं)

अद्य प्रसीदति मनो मम मारुतेन
यन्मल्लिकाकरमजि[1]ग्रहमीप्सितेन ।
यच्चानुरूपमिदमापयमेतदाप्ति-
साङ्कौटिना चरणदुर्ललितस्य[2] शत्रोः ॥ 1॥

ततस्ततः ?

**माकन्दः** – अथागच्छन्नेव रमयन्तिकासहायं नवमालिकादिभिः सहोपवनान्निभृतं निर्गच्छन्तं कलकण्ठमालोक्य भगवत्याः प्रथमप्रियावेदकः स्यामिति झटित्यागत एव । न पुनस्तेषामात्मानं प्रकाशितवानस्मि ।

---

1. अजीग्रहं, मु$_2$, त$_1$, त$_2$, के$_2$
2. यच्चानुरूपमुदजासयमेतदप्ति-
साङ्कूटिनावरणदुर्दुरुटस्य, मु$_2$, के$_2$

**मन्दाकिनी** – (हर्षातिशयं नाटयन्ती)

वत्स, अवाङ्मनसगोचरोऽयं मनोरथावाप्तिजन्मा महानन्दः[1] ।

**माकन्दः** – भगवति युज्यत एतत् ।

न वशंवदयाऽपि नाकलक्ष्म्या न च वित्तेन तथा सुधारसेन ।
प्रमदं भजते तथा[2] मनस्वी[3] परिपूर्णेन यथा मनोरथेन ॥12॥

(परितो दृष्ट्वा)

भगवति, क्वाद्य मल्लिकामारुतौ ?

**मन्दाकिनी** – मारुतः खलु[4] प्रागुपवनान्निर्गतः स्वपरिजनान्वेषणशङ्कया स्कन्धावारमेव गतः, सारसिकयाऽद्य गूढमानीतः समीपवर्तिनि लताभवने वर्तते, मल्लिका तु मयात्रानीता । अद्य सारसिकयैव तत्समीपं नीयमाना इतो निर्गता ।

(सानुकम्पं)

निःशङ्कमुत्कलिकया पुरतो विकृष्टा
निर्व्याजया मुहुरपत्रपया च पश्चात् ।
सा पुष्पकेतुशरपीडितकोमलाङ्गी
बाला कथञ्चिदुपकण्ठमगाद्विवोढुः ॥ 3 ॥

(सस्नेहं)

---

1. महानानन्दः, मै$_2$, के$_2$
2. जनो, के$_2$
3. मनः स्वयं, मु$_1$
4. om खलु, मु$_1$

हन्त, तिरयत्येव भीतिमङ्गनानां [1]गरीयान् प्रियजनानुरागः ।

तथाहि -

या मन्दिरे परिजनेन्दुमुखीकराब्ज-
माङ्गल्यदीपशतमण्डितपार्श्वदेशा ।
चङ्क्रम्यते किमपि सेयमिहान्धकारे
याता स्वयं रमणसन्निधिमत्रसन्ती ॥ 4 ॥

**माकन्दः** - (सहर्षं)
तदनुमन्यतां भगवती मां हिमाचलप्रस्थप्रस्थानाय । यावदमुनोदन्तेन विद्याधरामात्यमानन्दयामि ।

**मन्दाकिनी**[2] - (विमृश्य)
वत्स याहि । आनन्दय[3] मम योगविद्यासतीर्थं विश्वावसुम् ।

(माकन्दः प्रणम्य निष्क्रान्तः)

**मन्दाकिनी**- (विमृश्य, साशङ्कं ससंभ्रमं च)
हन्त, विस्मृतो मया तत्तदुपायव्यापृतचित्तया मूर्च्छाहरस्य वत्सायाः सीमन्तमणेः राक्षसव्यतिकरे भ्रंशः ।

(सनिर्वेदं)

---

1. om गरीयान् , मु$_1$
2. मु$_1$ omits the portion from मन्दाकिनी to निष्क्रान्तः ।
3. हर्षय, के$_1$

धिक् कष्टमिह महान् प्रमादः। क्वेदानीमन्विष्यामि?

(इत्युत्तिष्ठति। कर्णं दत्वा)

अयमसौ भगवत्याः प्रथमः किमपि व्याहरति।

(आकाशे लक्ष्यं बद्ध्वा)

भद्र, किं ब्रूषे? स खलु मणिः तस्यां निशि अन्येन खड्गजिह्वनाम्ना रक्षसा गृहीतो[1] अनुद्रवद्भिरप्यस्माभिः न समासादित इति।

(विषादं नाटयति। पुनराकाशे)

भद्र भूयः किमात्थ? अथ द्रविडेषु काञ्चीपुर-सविधेन धावंस्तत्कालोपस्थितेन देव्याः कामाक्ष्याः किङ्करेण निहतः स यातुधानः आच्छिन्नश्च तेनैव स मणिरिति।

(सोच्छ्वासं, विमृश्य)

अयमवसरो मम योगविद्याप्रकटनस्य। यावत्संभावितभाविमूर्च्छागमां मल्लिकामेव काञ्चीपुरं नयामि।

(इति निष्क्रान्ता)

॥ शुद्धविष्कम्भः ॥

(ततः प्रविशति लतामूलस्थो मारुतः।)

**मारुतः** – (सहर्षं)

---

1. हतो, के₂

अवश्यमद्यानेष्यत्येव मल्लिकां सारसिका ।

(औत्सुक्यातिशयं नाटयन् )

नीतास्ते दयितासिसंशयकृतः कल्पोपमा वासरा
प्राप्ता च प्रथमार्जितेन तपसा प्राणेश्वरी मल्लिका।
नेदीयांसमवैमि सम्प्रति तया सङ्गं तथाप्यन्तरे
यः कश्चित्क्षणसम्मितोऽपि[1] विरहो हा हन्त मे दुस्तरः॥ 5 ॥

(विमृश्य)

अथवा चेत एव दुस्तरं मन्यते यावदेतदाश्वासयामि ।

अये चेतो धैर्यं धर विधुरतां मा स्म भजथा
ननु प्रत्यासन्नो भवति दयितासङ्गममहः ।
तथा नामोत्तीर्णे महति विरहे पश्चषत्रुटि[2] -
व्यवच्छिन्नं कालं किमिति युगदीर्घं कलयसे ॥ 6 ॥

(निश्वस्य)

हन्त उत्तरोत्तरमुत्कृष्यमाणे मान्मथे प्राचण्ड्ये किं करोतु तपस्विचेतः । तथाहि-

आरभ्य तस्याः प्रथमावलोका-
दस्त्राणि यावन्त्यमुचन्मनोभूः ।
तावन्ति तेभ्योऽप्यधिकानि चाद्य
प्रयुङ्क्त एकक्षणमात्र एव ॥ ७ ॥

(परितो विलोक्य)

---

1. क्षणमस्ति सोऽपि, $मु_1$ 2. तृटि, $मु_2$

हन्त, सूचीभेद्यैरन्धकारैरभिव्याप्तमेकतमालो-
द्यानतुल्यं भुवनम् ।

(सकरुणं)

कथमपि दूरादप्याश्रमादस्मिन् समये समेष्यति
कोमलाङ्गी ।

दूयेते शिव शिव यौ सरोजताम्रौ
सैरन्ध्रीकरतलदत्तलाक्षयाऽपि ।
पादौ तौ तिमिरविसंष्ठुले स्थलेऽस्मि-
न्सञ्चारं चकितदृशः कथं सहेते ॥ 8 ॥

अथवा नातिशोचनीयमेतत् । यतः-

चरणौ नयने तमः प्रकाशो वनितानामसहायता वयस्या ।
अपि च प्रियवल्लभाभिसारे भवनप्राङ्गणकुट्टिमः कदध्वा ॥ 9 ॥

(नभो विलोक्य)

अये अङ्कुरितैवेयं मल्लिकायाः सरणिं
प्रकाशयन्ती दीपिकेव विद्रुमभङ्गपाटला
ज्योत्स्नावल्ली ।

(निर्वर्ण्य)

नवकुङ्कुमचर्चिका रजन्याः गगनाशोकतरोः प्रवालपङ्क्तिः ।
मणिकुन्तलता स्मरस्य मन्ये शशिनः प्राथमिकी मयूखलेखा ॥ 10 ॥

(प्राचीं विलोक्य, सकौतुकं)

अयमुदयति चन्द्रो वारिधेरम्बुगर्भा-
दमृतकणकरालैरंशुभिः दीप्यमानः ।

[1]भुजगशयनवक्षोहर्म्यदेशे ललन्त्या
वदनमिव यदृच्छोत्तानितं विश्वमातुः ॥11॥

अपि च,

[2]उज्जृम्भते कुमुदिनीसुकृतं मृगाङ्को
विष्वग्विकीर्णपरिपाटलरश्मिदण्डः ।
उत्सूतविद्रुमकुलो जलधेस्तरङ्गा-
दुत्क्षिप्यमाण इव कश्चन राजकम्बुः ॥12॥

(निर्वर्ण्य)

हन्त गलित एवोदयरागः । (साकूतं)

अनुसर्तुमना मनाङ्मनोज्ञं किमपि श्वेतत एष शीतधामा ।
वदनं निखिलोपमानदूरं [3]मदनातङ्कविपाण्डु मल्लिकायाः ॥13॥

(विहस्य)

यावदेनं दुर्लभार्थप्रार्थनदुर्ललितं किञ्चित् ब्रवीमि।

अभिलषसि यदीन्दो वक्त्रलक्ष्मीं मृगाक्ष्याः
पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्कम् ।
सुविमलमथ बिम्बं पारिजातस्य गन्धै-
स्सुरभय वद नो चेत् त्वं क्व तस्याः मुखं क्व ? ॥14॥

---

1. जलधि, $मु_1$ **gives the optional reading.**
2. उत्स्यूत, $मु_2$, $अ_1$, $के_2$
3. मदनान्तक°, **is the reading in all the mss. and ed. suggested reading is** मदनातङ्क °

अथवा अद्यैवागतायास्तस्याः सुरभिसुन्दरं वदनं प्रदर्श्य त्वां संवादयामि ।

(कर्णं दत्वा, सहर्षं)

हन्त,आगतैव प्रेयसी ।

इदमिदमलसाक्ष्याः श्रूयते मञ्जुतारं
जघनभरगताया झङ्कृतं मेखलायाः ।

(पुनः कर्णं दत्वा, सविषादं)

नहि नहि विधुबिम्बे बध्नतां स्वीयबुद्धिं
सरसि सरसि सोऽयं निस्वनो हंसयूनाम् ॥15॥

(नेपथ्ये)

इदो इदो ज़ोण्हापरिआअसिएण[1] मग्गेण मन्दं एदु पिअसही ।

[इतः इतः । ज्योत्स्नाप्रकाशितेन मार्गेण मन्दं एतु प्रियसखी ।]

**मारुतः** – (आकर्ण्य, सानन्दं)

सत्यमागतैव मल्लिका। श्रूयते खलु पश्चिमतो लतान्तरितः सारसिकायाः स्वरः ।

(विलोकनं नाटयति। पुनर्नेपथ्ये)

---

1. जोण्हिआ सिदेण, [ज्योत्स्नया सितेन] मु,

जोण्हाहिं ण्हावयन्दो दिणअरकिरणक्केरढड्ढं पवञ्चं
इसुब्भिण्णन्दं[1] णीलुप्पलपअलिअलोलम्बवाआलिआसो[2]।
एसो दिट्ठो मिअङ्को पहिअ हिअअसंमोहणो रोहिणीए
सेच्छारिद्धत्थणालिङ्गणविलुलिअकत्थुरिआसंकिअङ्को ॥16॥

[ज्योत्स्नाभिः स्नापयन् दिनकरकिरणक्रौर्यदग्धं प्रपञ्चं
ईषदुद्भिद्यन्नीलोत्पलप्रचलितलोलम्बवाचालिताशः।
एष दृष्टो मृगाङ्को पथिकहृदयसंमोहनो रोहिण्या
स्वेच्छारब्धस्तनालिङ्गनविलुलितकस्तूरिकाशङ्किताङ्कः ॥16॥]

**मारुतः** – (विलोक्य, साभिलाषं)

इयमभिसरत्यारादङ्गैरनङ्गहतैः[3] प्रिया
चकितचकितां विन्यस्यन्ती दृशं शशलाञ्छने।
अलघुविपुलश्रोणीभारालसालसचङ्क्रम-
श्रमसमुदितस्वेदच्छेदाभिराममुखाम्बुजा ॥ 17 ॥

(निर्वर्ण्य)

हन्त चन्द्रिकापातसविशेषमण्डितानि तन्वङ्ग्या अङ्गकानि।

तथाहि-

चन्दनचर्चास्तनयोर्धम्मिल्ले मल्लिका दाम।
क्षौमं नितम्बबिम्बे चन्द्रकरा क्षाममध्यायाः ॥18॥

---

1. एण्हिंणंदन्त ॰ [इदानीं नन्दन्त ॰], $मु_2$, $म_1$, $अ_1$.
2. भसलहलहलब्बोल ॰, [भ्रमरकोलाहल ॰], $मु_2$, $अ_1$
3. धृतैः, $मु_2$, $त_2$, $अ_1$

(विहस्य)

अहो विशिष्टवस्त्वभिलाषो मञ्जूनाम्[1]। एते हि –

जहतः शशाङ्ककिरणान् पिपासवः सुरभिलां मुखज्योत्स्नाम्।
चञ्चूर्यन्ते परितश्चकोरपोताः चकोराक्षीम् ॥19 ॥

(पुनर्निर्वर्ण्य, सस्मितं)

न केवलं चकोर एव ।

स्वयमयमपि चन्द्रः प्रागुपालब्धकान्तिः
पिपठिषुरभिरामां सुभ्रुवो वक्त्रलक्ष्मीम् ।
[2]अविरलभवदध्वस्वेदलेशानुकीर्णं
प्रतिफलनमिषेण प्राप्तवान् गण्डमूलम् ॥ 20 ॥

(यावदहं प्रत्युद्गच्छामि)

अथवात्रैव स्थितः[3] सुललितमस्या आगमनं निर्वर्णयामि ।

(ततः प्रविशति यथोद्दिष्टा मल्लिका सारसिका च)

**मल्लिका** – (स्वगतं)

अज्ज पुढमं अज्जइत्तं अहिसरन्ती परवसह्मि अ सज्झेहिं लज्जाकोलाहलेहिम् ।

[(स्वगतं) अद्य प्रथममार्यपुत्रमभिसरन्ती परवशाऽस्मि च साध्वसैः लज्जाकोलाहलैः ।]

---

1. जन्तूनाम् , $मु_{2}$, $त_{2}$, $अ_{1}$, $के_{2}$
2. ° अच्छ, $म_{2}$, $अ_{1}$
3. स्थित्वा, $के_{2}$

**सारसिका** – इदो इदो । [इतः इतः ।]

(इति परिक्रामतः)

**मारुतः** – (साभिलाषं) इयं खलु,

उत्तुङ्गस्तनभरतान्ततान्तमध्यं
विश्लिष्यद्धनकचवान्तवान्तसूनम् ।
वक्त्राब्जभ्रमदलिभीतभीतनेत्रं
मुग्धाक्षी मम धुरि[1] मन्दमन्दमेति ॥ 21॥

**मल्लिका** – सहि सारसिए! कहिं णु अज्जउत्तो वट्टइ ? उक्कण्ठइ मह चन्ददंसणणुव्वेइआ[2] दिट्ठि अज्जउत्तमुहारविन्दं ढट्ठुम् ।

[सखि सारसिके ! कुत्र नु आर्यपुत्रो वर्तते ? उत्कण्ठते मम चन्द्रदर्शनोद्वेजिता दृष्टिः आर्यपुत्रमुखारविन्दं द्रष्टुम् ।]

**मारुतः** – (सानन्दं)

अद्य हि सफलं यौवनमद्य हि देवः स्मरः प्रसन्नो मे ।
अभिधेयोऽस्मि यदस्या रमणीयस्यार्यपुत्रशब्दस्य ॥ 22॥

**सारसिका** – सहि समीवं चिअ वट्टइ । आअच्छेहि पञ्चसाणि पआणी ।

[सखि, समीप एव वर्तते । आगच्छ पञ्चषाणि पदानि ।]

---

1. मदकरि, $मु_2$, $त_2$, $के_2$    2. °प्पेइआ, $मु_1$

**मल्लिका** – (स्वगतं)

अह्महे ! अज्जउत्तदंसणस्सुआए मह पञ्चपअ परिमिदो वि दुल्लङ्घो एव्व पदेसो ।

(पञ्चषाणि पदानि गत्वा, परितो विलोक्य, सविषार्दं)

सहि सारसिए मिच्छा कहेसि । एत्थ वि णदीसइ अज्जउत्तो ।

[(स्वगतं) अहो आर्यपुत्रदर्शनोत्सुकाया मम पञ्चषपदपरिमितोऽपि दुर्लङ्घ एव प्रदेशः । (पञ्चषाणि पदानि गत्वा, परितो विलोक्य, सविषादं) सखि सारसिके मिथ्या कथयसे । अत्रापि न दृश्यते आर्यपुत्रः ।]

**सारसिका**– (विहस्य)

सहि मल्लिए ! सच्चं । तुह विशालतुङ्गेण णिअम्भभरेण किलन्ता एव्व णवपल्लवकोमला चरणवोम्मा । तहवि पत्थेमि, पुणो वि किञ्चिअ अग्गदो आअच्छ ।

(अङ्गुल्या दर्शयन्ती)

एत्थ पेक्ख णाइदूरवट्टिणि लदामूले सण्णिहिदेण होदव्वम् ।

[(विहस्य) सखि मल्लिके, सत्यम् । तव विशालतुङ्गेन नितम्बभरेण क्लान्तावेव नवपल्लवकोमलौ चरणपद्मौ । तथापि प्रार्थयामि पुनरपि किञ्चिदग्रत आगच्छ । (अङ्गुल्या दर्शयन्ती) अत्र पश्य, नातिदूरवर्तिनि लतामूले सन्निहितेन भवितव्यम् ।]

**मल्लिका** – (साकूतं)[1]

जइ एव्वं ता सणिअं सणिअं गच्छह्म। अविण्णादेव्व गदुअ परिरहस्सं अज्जउत्तम्।

[यद्येवं तावच्छनैश्शनैर्गच्छामः। अविज्ञातैव गत्वा परिरप्स्ये आर्यपुत्रम्।]

(इति पदान्तरं गत्वा सलज्जं तिष्ठति)

**मारुतः** – (झटित्युपसृत्य)

सोढुमलमस्मि नाहं सुन्दरि मन्दागमाद्विलम्बं ते।
पञ्चशरास्त्रहतं मां सञ्जीवय चारुगात्रि परिरम्भैः॥

(इति मल्लिकायाः हस्तं ग्रहीतुमिच्छति)

**मल्लिका** – (दृष्ट्वा, सानन्दं, स्वगतं)

अम्महे सअं एत्थ आअओ अज्जउत्तो।

[अहो स्वयमत्रागतः आर्यपुत्रः।]

(ससाध्वसलज्जमपक्रामति)

**सारसिका** – सहि एत्तिअं समअं तह तह णाम उम्मुआ भविअ एहिं उण हत्थग्गहणे वि जणिअ संभमा धावसि।

[सखि, एतावन्तं समयं तथा तथा नामोत्सुका भूत्वा इदानीं पुनर्हस्तग्रहणेऽपि जनितसंभ्रमा धावसि।]

(मल्लिका अदत्तोत्तरैव सलज्जं तिष्ठति)

---

1. सकौतुकं, के[1]

**मारुतः** – (सस्पृहं, स्वगतं)

अस्याः स्थितं किमपि संप्रति लोभनीयं
नम्रभ्रुवो नमितमुग्धमुखारविन्दम् ।
मन्दाक्षमन्थरविलोलविलोचनाब्ज-
च्छायाश्चलच्छुरणशाद्वलितस्तनायाः ॥ 24 ॥

(विमृश्य)

भवतु । एवं तावत् ।

(प्रकाशं)

प्रिये, मा तावत् करावलम्बः । एतत्पुन-रनुमन्तव्यं मे[1] ।

यदिदमगणायित्वा दुर्वहं श्रोणिभारं
मदभिसरणलोभात्प्रस्थितं पद्मताम्रम् ।
अयमहमभिवाञ्छाम्यप्रमृज्यैव पांसु
सुमुखि पदतलं ते चूडितुं चुम्बितुं च ॥ 25 ॥

**मल्लिका** – (ससाध्वसकम्पं, स्वगतं)

अह्महे ण जाणामि लज्जाए पडिवत्तुम्मि ।

[अहो न जानामि लज्जया प्रतिवक्तुमपि ।]

**मारुतः** – (मल्लिकां निर्वर्ण्य, सानुकम्पं)

सारसिके, न विरमत्यद्याप्यागमनजनितः परिश्रमो मालतीदलसुकुमाराङ्ग्या[2] मल्लिकायाः। पश्य-

---

1. ° अनुमन्तव्यमेव । $मु_2$, $त_2$, $के_1$, $के_2$
2. कोमलाङ्ग्या, $के_2$

नो शाम्यन्ति[1] श्वसितमरुतः सौरभोद्भ्रान्तभृङ्गा
मुग्धो मध्यस्तनतटभरोत्पीडितस्त्रुट्यतीव ।
ऊर्वोश्चार्वोरुपरि जघनाक्रान्तयोरस्ति खेदो
भूयो भूयो वदनकमले भूयते घर्मलेशैः ॥ 26॥

**सारसिका** - ता एत्थ एव्व घणसारक्खोदधवलसीअल-जोण्हावादसुन्दरे कुसुमधूलिसिअदिले सिलाअले उवविसदु महाभाओ जेण पिअसही वि उवविसदि।

[तस्मादत्रैव घनसारक्षोदधवलशीतलज्योत्स्नापातसुन्दरे कुसुमधूलिसिकतिले शिलातले उपविशतु महाभागः येन प्रियसख्यप्युपविशति।]

(मारुतः उपविशति)

**सारसिका**- सहि, तुमं वि उवविस ।
[सखि, त्वमपि उपविश ।]

(मल्लिका सव्रीडं तिष्ठति)

**सारसिका** - महाभाअ, ण सुणादि एसा मह वअणम् । ता तुमं एव्व भण ।

[महाभाग, न शृणोत्येषा मम वचनम् । तस्मात्त्वमेव भण ।]

1. नःश्राम्यन्ति, मु$_2$, त$_2$, के$_2$

**मारुतः** –

उत्सङ्गोऽयं विपुलजघने भूषयस्वैष पाणिः
संवाहाय स्पृहयति शनैरर्पयस्वात्र पादम् ।
वक्षस्यस्मिन्नपि च कुचयोः स्वैरमारोप्य भारं
सक्तासक्तोल्लिखितविभवं मध्यमुल्लाघयस्व ॥ 27 ॥

**मल्लिका** – (स्वगतं)

हन्त, महुरमहुरा अज्जउत्तस्स चाडुपरिपाडी ।

[हन्त, मधुरमधुरा आर्यपुत्रस्य चाटुपरिपाटी ।]

(सारसिकया सह शिलातल एव उपविशति)

**मारुतः** – (स्वगतं)

हन्त, लज्जावती प्रस्तर एवोपविष्टा । उपालभे तावत् ।

(प्रकाशं)[1]

मुग्धे [2]नूतनकर्णिकारकुसुमापातादपित्रस्न्विदं
पाषाणासिकया किमित्यकरुणे प्रम्लापयस्यङ्गकम् ।
यद्यात्मीयमिति भ्रमस्तव महान्प्रागेवमासीदपि
त्वद्यारभ्य ममैव तत्[3] तव पुनर्ज्ञातव्यमेतद्वपुः ॥ 28 ॥

**मल्लिका** – (सहर्षं, स्वगतं)

अज्जउत्तस्स एदं त्ति महन्तो पेम्मो अस्सिं सरीरे वि । कण्णा ! पिबह तुह्मे पेऊसम् ।

---

1. om प्रकाशं, $मु_1$, $मु_2$ 2. °रेणुकणिका, $मु_2$, $त_2$
3. add स्ववपुर्दर्शयन् , $मु_1$, $मै_1$, $मै_2$, $मै_4$, $के_1$, $के_2$

(सौत्सुक्यं)

अच्छिओ तुह्मे उण तह णाम परोक्खे उक्कण्ठिआ भविअ, अज्ज सण्णिहिदे अज्जउत्ते अप्पाणं वञ्चेह ।

[(सहर्षं, स्वगतं) आर्यपुत्रस्य एतदिति महत्प्रेम अस्मिन् शरीरेऽपि । कर्णौ ! पिबतं युवां पीयूषम् । अक्षिणी । युवां पुनः यथा नाम परोक्षे उत्कण्ठिते भूत्वा अद्य सन्निहिते आर्यपुत्रे आत्मानं वञ्चयथः ।]

(इति किञ्चिदिव दृष्ट्वा सलज्जं व्यावर्तते )

**मारुतः** - (सरोमाञ्चं, स्वगतं)

हन्त, अतिसूक्ष्मरमणीयः प्रेयस्या भावव्यतिकरः ।

अद्यानया प्रियसखीमपि वञ्चयित्वा
मुग्धारविन्दमधुरं मुखमुन्नमय्य ।
दिष्ट्याऽपि[1] नैव विदितः सुदृशा कटाक्षः
क्षिप्तक्षणं मयि पुनः प्रतिसंहृतश्च ॥ 29 ॥

(विमृश्य) एवं मन्ये ।

व्रीडावेलारुद्धं सागरतोयमिव योषितां हृदयम् ।
रागेन्दुरुदयमानो भूयो भूयस्तरङ्गयति ॥ 30 ॥

(सौत्सुक्यं)

1. दृष्ट्या, $मु_2$

हन्त, चेतसः चिरकाङ्क्षितार्थसाधनेऽपि वैहस्त्यम् ।

नीवीदृढार्पितकरां निबिडीकृतोरुं
व्रीडानतां तत इतो वदनं हरन्तीम् ।
आरोप्य वक्षसि सुखं[1] परिरब्धुमेनां
बालां बलादभिलषामि न पारयामि ॥ 31 ॥

भवतु । पुनरपि प्रार्थये ।

(प्रकाशं)

अयि मल्लिके!

इदं दूर्वाकाण्डद्युतिमुषिकपोले कतिपयैः
श्रमाम्भोभिः कीर्णं सहजवकुलामोदसुभगम् ।
समाकाङ्क्षे ताम्राधरमनुमनुष्व प्रियतमे
मनोज्ञं ते पातुं मुखकमलमाघ्रातुमथवा ॥ 32 ॥

अपि च,[2]

वितर च कुचयोस्त्वद्दर्शनोपक्रमाणां
मदनशररुजानां शान्तये मामकीनाम् ।
सकृदपि परिरम्भं सुभ्रु दोर्मूलकूल-
ङ्कषघनपरिणाहख्यातयोरेतयोस्ते ॥ 33 ॥

अथवा,[3]

आस्तिर्यक्चटुलमृगाक्षि मन्यसे चे-
दाश्लेषे स्तनतटयोरतिप्रसङ्गम् ।

---

1. दृढं, $अ_1$  2. अथवा, $मु_1$  3. om अथवा, $मु_1$

कूजाभिर्विहितरुजौ कुहूमुखानां
वाचा वा शिशिरय वल्गुवाणि कर्णौ ॥ 34 ॥

(मल्लिका लज्जमाना तूष्णीं भवति ।)

**मारुतः** – (विलोक्य, सस्पृहं)

न निषेधति नानुमन्यते वा
वचसा नम्रमुखी ममेप्सितानि ।
अपि तु प्रणयप्रमोदलज्जा-
परिपूर्णं नयनोत्पलं बिभर्ति ॥ 35 ॥

**सारसिका** –सहि, णं तुए भणिदं अज्जउत्तं अविण्णादा गदुअ परिरम्भिस्सत्ति ।

[सखि ननु त्वयैव भणितं 'आर्यपुत्रं अविज्ञाता गत्वा परिरप्स्य', इति ]

**मारुतः** –

नन्वावयोः प्रथमदर्शन एव बाले
मालां कुचप्रणयिनीमयि मे व्यतार्षीः ।
अद्यानयोस्तु कुचयोः परिरम्भदाने
किं चिन्त्यते क्व नु गतः स उदारभावः ॥ 36 ॥

अथ यद्येवं न करिष्यसि –

स्पन्दन्ते स्मयमानकैरवमधुस्यूताश्च मन्दानिलाः[1]
सन्त्येते मदनास्त्रपावकशिखाश्चन्द्रांशवः प्रांशवः ।

---

1. ° स्यूता निशीथा °, $मु_2$, $त_1$, $म_1$, $अ_1$

गर्वान्धाः प्रतिवल्लि कर्णपरुषं गुञ्जन्ति पुष्पन्धयाः
सर्वेभ्यो विभजामि मद्वपुरिदं बाले तवैवाग्रतः ॥ 37 ॥

**मल्लिका**– (सावेगं अपवार्य)

सारसिए ! अवि सच्चं अज्जउत्तस्स ववसिदम् ?

[सारसिके, अपि सत्यं आर्यपुत्रस्य व्यवसितम् ?]

**सारसिके** – मुद्धे[1], ण जाणासि एदस्स साहससीलत्तणम्? जेण पुढमं वि तुह अलाहं आसंकिअ कण्ठमूले करवालो पसारिओ । ता झत्ति अस्स अहिलासं पूरेहि । वारेहि वा वअणेण ।

[मुग्धे, न जानासि एतस्य साहसशीलत्वम् ? येन प्रथममपि तवालाभमाशङ्क्य कण्ठमूले करवालः प्रसारितः । तस्माज्झटित्यस्याभिलाषं पूरय । निवारय वा वचनेन ।]

**मल्लिका** – (स्वगतं)

वारेमि दाव ।

(प्रकाशं)

अज्जउत्त !

(इत्यर्धोक्ते, सलज्जं, अपवार्य)

सहि सहि, तुमं णिवारेहि । णाहं अप्पणो पहवामि लज्जाए ।

---

1. मुग्धे, मु₁

[(स्वगतं) वारयामि तावत् । (प्रकाशं) आर्यपुत्र! (इत्यर्धोक्ते सलज्जं अपवार्य) सखि, सखि, त्वं निवारय। नाहं आत्मनः प्रभवामि लज्जया।]

**मारुतः** – (सानन्दं, स्वगतं)

साधीयानयं कपटसाहसोपन्यासः । यतः –

अव्यक्तकोमलाक्षरमर्धोदितविरतमार्यपुत्रेति ।
अस्या मुखेन्दुबिम्बादमृतमिव स्यन्दितं वचनम् ॥ 38 ॥

(प्रकाशं)

सारसिके, किमाह भीरु मध्यमा मदर्थितस्य ।

**सारसिका** – अणुऊलं एव्व भणदि, णाहं अप्पणो पहवमित्ति ।

[अनुकूलमेव भणति, नाहमात्मनः प्रभवामीति ।]

**मारुतः** – कस्तर्हि प्रभवति ?

**सारसिका** – णं महाभाअ एव्व । [ननु महाभाग एव ।]

**मारुतः** – (सहर्षं)

यदि प्रिये वेत्सि तव प्रभुं मा
मनन्यसाधारणदासमङ्घ्रयोः ।
तदद्य वक्षो मम पात्रमस्तु
स्वयंग्रहाश्लेषमहोत्सवानाम् ॥ 39 ॥

**मल्लिका** – (सासूयं, अपवार्य)

सारसिए, कीस तुमं सअङ्गहे पवट्टावेसि ?

[सारसिके, कस्मात्त्वं स्वयंग्रहे प्रवर्तयसि ?]

(अपसर्तुमिच्छति)

**सारसिका** – (हस्तेन धृत्वा, विहस्य)

सहि, कीस तुह णीरन्धरोमञ्चवह्मला थणकुम्भा। मण्णे सअङ्गहादो भीदा पुलअकञ्चुएहिं सञ्छादिता एदे त्ति ।

[सखि, कस्मात्तव नीरन्ध्ररोमाञ्चपक्ष्मलौ स्तन-कुम्भौ ? मन्ये स्वयंग्रहाद्भीतौ पुलककञ्चुकै-स्सञ्छादितावेतौ इति ।]

**मारुतः** – (स्वगतं)

साधु सारसिके, साधु। सम्यगुपक्षिप्तवत्यसि। नन्वन्तेवासिन्यसि मन्दाकिन्याः।

(प्रकाशं)

सारसिके, अपि सत्यं मदुपगूहभीतौ धृतकञ्चुकौ स्तनौ ?

**सारसिका** – अह इम् ? [अथ किम् ?]

**मारुतः** – यद्येवमुपालभे तावदेतौ ।

तरुणिमकरिकुम्भौ हे प्रियोरोजकुम्भौ
किमिति न परिरम्भं म्लायतो मे सहेथे।
समुचितमथवा वां यौ युवां निर्दयौ स्थः
प्रकटितगरिमाणौ भज्यमानेऽपि मध्ये ॥ 40 ॥

---

1. प्रिये राजकुम्भौ, मु[1]

**मल्लिका** – (सासूयं)

सारसिए, कीस मिच्छा कहेसि ?

[सारसिके, कस्मान्मिथ्या कथयसि ?]

**मारुतः** – सारसिके, किं मिथ्यैव कथयसि ?

**सारसिका** – (सस्मितं)

कहं दुवे वि मिच्छावाइणिं मं कप्पेह, ता महाभाअस्स हत्थो एव्व एत्थ मज्झत्थं होदु ।

[कथं द्वावपि मिथ्यावादिनीं मां कल्पयथः? तस्मान्महाभागस्य हस्त एवात्र मध्यस्तो भवतु ।]

**मल्लिका** –मा मा एत्थ मज्झत्थं आणेह। सव्वं एव्व तुमं भणासि।

[मा माऽत्र मध्यस्थमानय। सर्वं एव त्वं भणसि।]

**सारसिका** – णाहं तुह्माणं मिच्छावाआहिसावं सहेमि ।

(मारुतस्य हस्तमवलम्ब्य)

महाभाअ, पेच्छदु तुह हत्थो ।

[नाहं युवयोर्मिथ्यावादाभिशापं सहे । (मारुतस्य हस्तमवलम्ब्य) महाभाग, पश्यतु तव हस्तः ।]

**मारुतः** – प्रिये ममापि मिथ्यैवेति निर्णयः । सारसिका तु निर्बध्नाति ।

(हस्तं प्रसारयन्, ससाध्वसकम्पं, स्वगतं) आश्चर्यम्!

प्राग्भावनारतिविधिष्वनिवार्यवृत्तिः
प्रागल्भत प्रसभमम्बरकर्षणेऽपि ।
पारिप्लवाङ्गुलिरधिस्तनमद्य तन्व्याः
पाणिः प्रसर्तुमपि न क्षमते कथं मे ॥ 41॥

(कथमपि करतलेन सपुलकं स्तनं स्पृशति । सानन्दं, स्वगतं)

स्वयमेव केवलं न स्तनौ प्रियायाः प्ररूढघनपुलकौ ।
पुलकयतोऽपि ममेतौ सर्वाङ्गं करतलस्पृष्टौ ॥ 42 ॥

(प्रकशं)

सारसिके, नन्वेतस्मिंस्ते तद्भ्रमः ।

इमां [1]समकठोरयोः कमलनालघर्मद्रुहोः
कथन्नु कुचकुम्भयोः पुलकमञ्जरीं मन्यसे ।
कदम्बनवकुड्मलप्रकरगुम्फिता नन्वियं
मनोभवसमर्पिता स्फुरति कापि हारावलिः[2] ॥ 43 ॥

**सारसिका** – (विलोक्य, संस्कृमाश्रित्य, स्वगतं)

प्रियपाणिपल्लवतलाभिमुद्रितः
सुदृशः स्तनः श्रमकणैः करम्बितः ।
अनुयाति [3]मङ्गलकुलेशयोल्लस-
न्मदनाभिषेकमणिकुम्भडम्बरम् ॥ 44 ॥

ता जाव अहं लअन्तरिदा होमि ।
[तस्मात् यावदहं लतान्तरिता भवामि ]

**मल्लिका** – (स्वगतं)

हन्त, ण सक्कुणोमि अज्जउत्तस्स हत्थ-कमलादोत्थणं अवहरिदुम् ।
[हन्त, न शक्नोमि आर्यपुत्रस्य हस्तकमलात् स्तनं अपहर्तुम् ।]

(कथञ्चिदपहरति)

**मारुतः** – (सविषादं) हन्त,

---

1. ° द्रुहं, $मु_2$, $त_2$, $के_2$ 2. ° ली, $म_1$, $मु_2$ $त_{11}$ 3. शे°, $मु_2$, $अ_1$, $के_2$

सकृदिव समर्प्य बाले मम हस्ते मदनघर्मतप्तस्य ।
अपहरसे कुचकुम्भं तृषितकरादमृतकुम्भमिव ॥ 45 ॥

**मल्लिका** – (स्वगतं)

हत्थि, अज्जउत्तस्स करकमलादो ओसरन्तीए मह पुणोवि दुव्विसहा जोण्हा ।
[हन्त, आर्यपुत्रस्य करकमलादपसरन्त्या मम पुनरपि दुर्विषहा ज्योत्स्ना ।]

**मारुतः** – (स्वगतं)

भूयोऽपि साहसमुपन्यसामि ।

(प्रकाशं)

अयि प्रिये, यद्येवमकरुणासि,

उपरि पतति चण्डे चन्द्रिकाश्वेतवह्नौ
मरुति किरति विष्वग्पुष्पधूलीकुकूलम् ।
प्रविशतु मदनाग्निप्लुष्टशेषं वपुर्मे
परिचलदलिधूमं पल्लवाङ्गारतल्पम् ॥ 46 ॥

यावत्पर्यन्तभाजो लतायाः पल्लवैस्तल्पं कल्पयामि ।
(निष्क्रान्तः । मल्लिका भयं नाटयति)

**सारसिका** – (स्वगतं)

साहु आढत्तं महाभाएण ।

(प्रकाशं)

सहि णिक्करुणे, पेच्छ पेच्छ । सअं एव्व किसलएहिं तप्पं कप्पिऊण पविसइ[1] महाभाओ ।

---

1. उपविसइ [उपविशति], $मु_2$

[(स्वगतं) साधु आरब्धं महाभागेन। (प्रकाशं) सखि, निष्करुणे, पश्य पश्य। सत्यमेव किसलयैः तल्पं कल्पयित्वा, प्रविशति महाभागः।]

**मल्लिका** - (ससंभ्रममुत्थाय)

अज्जउत्त, मा साहसं अणुचिट्ठ।

(सबाष्पं)

हन्त, पविट्ठो एव्व। ता अहं वि तं एव्व पल्लवतप्पं पविसामि।

[(ससंभ्रममुत्थाय) आर्यपुत्र, मा मा साहसमनुतिष्ठ। (सबाष्पं) हन्त प्रविष्ट एव। तस्मादहमपि तमेव पल्लवतल्पं प्रविशामि।]

**सारसिका** - (विहस्य, स्वगतं)

तं एव्व पत्थीअदि। [तदेव प्रार्थयते।]

(मल्लिका सत्वरं निष्क्रान्ता)

**सारसिका** -(विलोक्य, सस्मितं)

हन्त, सअं एव्व परिरद्धो मुद्धाए वल्लहो ता अहं वि अण्णस्सिं लआमूले चिट्ठामि।

(तथा कृत्वा, सवितर्कं)

अह ण जाणिदो कलअंठादीनां वुत्तन्दो।

(कर्णं दत्वा)

पदसद्दो विअ!

[(विलोक्य, सस्मितं) हन्त, सत्यमेव परिरब्धो मुग्धया वल्लभः। तस्मादहमपि अन्यस्मिन् लतामूले तिष्ठामि। (तथा कृत्वा, सवितर्कं) अथ न ज्ञातः कलकण्ठादीनां वृत्तान्तः। (कर्णं दत्वा) पदशब्द इव! ]

(ततः प्रविशति भ्रमरकद्वितीयः कलकण्ठः, अवगुण्ठिताश्च रमयन्तिकानवमालिका-कालिन्दीमधुकरिकाः।)

**कलकण्ठः** – भ्रमरक, कथमाश्रमे न दृष्टो मल्लिकासखो वयस्यः ?

**भ्रमरकः** – णाह, भअवदी अस्समेसु दिट्ठव्वम्[1]।
[नाथ, भगवत्याश्रमेषु द्रष्टव्यम्।]

**कलकण्ठः**– भवतु। एषु चन्द्रिकावतारसुभगेषु लतामूलेष्वन्विष्यामः।

**सर्वाः** – अदि हि णाम उस्सुआह्म पिअसहीए मल्लिआए दंसणस्स।
[अति हि नाम उत्सुकाः स्मः प्रियसख्याः मल्लिकायाः दर्शनाय।]

**नवमालिका** – सहीओ सहपंसुकीलणादो आरहिअ एत्तिअं समअं पिअसहीए अमुक्कवासा अज्जव्व अहं अदंसणदुःखं जाणामि।

---

1. भअवई वि आसमे ण दिट्ठव्व !
[भगवत्यपि आश्रमे न दृष्टैव !], मु$_2$

[सख्यः, सहपांसुक्रीडनादारभ्य एतावत्समयं प्रियसख्याः अमुक्तवासा अद्यैवाहमदर्शनदुःखं जानामि ।]

**सारसिका** – (विलोक्य, सहर्षं)

हन्त, मइ चिन्तअन्तीअं एव्व आअदा एदे ।

[हन्त, मयि चिन्तयन्त्यामेव आगता एते ।]

**कलकण्ठः** – (विलोक्य, सहर्षं)

इयं सारसिका ।

**सर्वाः** – (सहर्षं)

अह्महे, सारसिआ ! [अहो, सारसिका !]

**सारसिका** – (निर्वर्ण्य, सानन्दं)

रमअंतिआ वि एसा ।

(उपसृत्य)

महाभाअ, दिट्ठिआ वड्ढसि पिअदमालाहेण । (रमयन्तिकां प्रति)

सहि दिट्ठिआ लद्धासि ।

[(निर्वर्ण्य, सानन्दं) रमयन्तिकाऽप्येषा । (उपसृत्य) महाभाग दिष्ट्या वर्धसे प्रियतमालाभेन । (रमयन्तिकां प्रति) सखि, दिष्ट्या लब्धासि ।]

**रमयन्तिका** – सहि, सारसिए, कहिं णु मल्लिआ ?

[सखि, सारसिके, कुत्र नु मल्लिका ?

**इतरा:** – तुरिअतुरिअं भण । [त्वरितत्वरितं भण !]

**सारसिका** – (हस्तेन[1] प्रदर्श्य)

एत्थ लआपदेसे अज्जव्व कहं वि मारुएण णं सङ्गमिअ इह आअदह्मि ।

[एतल्लताप्रदेशे अद्यैव कथमपि मारुतेन ननु सङ्गमय्य इह आगताऽस्मि ।]

**नवमालिका** – (सहर्षं, सस्मितश्च)

कालिन्दि, लज्जावइस्सामो पिअसहीं णम्मगब्भेहिं वअणेहिम् ।

[कालिन्दि, लज्जापयिष्यामो प्रियसखीं नर्मगर्भैर्वचनैः ।]

**कलकण्ठः** – (पुरतो दृष्ट्वा, ससंभ्रमं)

अहो सर्वतः संक्षुभित इवायं प्रदेशः ।

(पुनर्विलोक्य) सारसिके, पश्य पश्य !

निरुन्धद्विष्वश्चं किरणमहिमानं हिमरुचः
प्रतिघ्नच्चक्षूंषि प्रकटितभयाश्चर्यमभितः ।
तमो वा तेजो वा तदुभयपरिस्फूर्तिरथवा[2]
किमप्येतत्तत्वं तिरयति जगद्दीपयति च ॥ 47 ॥

(सर्वाः सभयविस्मयं पश्यन्ति । नेपथ्ये)

---

1. सस्नेहं, $मु_1$ 2. परिप्रक्तिः, $मु_2$, $त_2$

हा प्रिये, मल्लिके !

**कलकण्ठः** – ([1]साशङ्कं, सविषादश्च)

हन्त, वयस्यस्यायमार्त आक्रन्दः ।

(सर्वा अशनिताडिता इव भवन्ति । कलकण्ठः सत्वरमुपसर्पति । ततः प्रविशति सबाष्पवदनो मारुतः ।)

**मारुतः** – हा प्रिये, केनापहृतासि[2] ?

स्फुरति[3] कशयेवात्मा चेतो निमग्नमिवानले
भवति च वपुः [4]क्ष्वेलग्रासादिवाधिकविह्वलम् ।
अयि हतविधे प्रापय्य प्राक् तथा पदमुच्चकैः
अकरुण कथन्वन्धे कूपे निपातयसेऽद्य माम् ॥48॥

**कलकण्ठः** – (उपश्लिष्य) सखे किमासीन्मल्लिकायाः ?

**सर्वाः** – (उपसृत्य)

महाभाअ, किं णु पिअसहीए ?
[महाभाग, किन्नु प्रियसख्याः ?]

**मारुतः** – (विलोक्य, सबाष्पातिशयं, स्वगतं)

हन्त, आगता एतेऽपि ।

(प्रकाशं)

हा सखे व्यर्थस्ते परिश्रमः । हा सख्यः, मुषितं वो जीवितम् ।

---

1. add श्रुत्वा, के$_1$
2. क्व अपसृताऽसि ?, मु$_1$
3. स्फुटति, मु$_2$, मै$_4$, के$_2$
4. क्ष्वेड °, मु$_1$

**कलकण्ठः** – सखे, कथमव्यक्तकथनेन खेदयसि ? ननु पृच्छयते, किमासीन्मालिकाया इति ।

**सारसिका** – महाभाअ, णं दाणिं एव्व तुम पल्लवतप्पे सम्पत्ता !

[महाभाग, नन्विदानीमेव त्वां पल्लवतल्पे सम्प्राप्ता !]

**मारुतः** – तर्हि श्रूयतां श्रवणपरुषम् ।

अव्याजरम्यमधरग्रहलोलुपोऽहं
व्रीडानतं वदनमुन्नमयामि यावत् ।
तावत्कुरङ्गशिशुकातरकातरे ते
नेत्रे निमीलितवती बत हा हतोऽस्मि ॥ 49 ॥

(इति पतति )

**कलकण्टः** –(धृत्वा)

सखे, यदि मूर्च्छिता, तर्हि एहि शिशिरैरुपचारै[1]-राश्वासयामः ।

**सर्वाः** – (सबाष्पं)

झत्तिं आसासेह्म पिंअसहिम् ।

[झटित्याश्वासयामः प्रियसखीम् ।]

**सारसिका** – (स्मृत्वा)

महाभाअ, कहिं मह कण्णे पुढमं एव्व भअवदीए, मल्लिआ पुडमसङ्गमे मुच्छिआ भविस्सदित्ति । ता आसासेह्म।

---

1. om उपचारैः, मु,

[महाभाग, कथितं मम कर्णे प्रथममेव भगवत्या, मल्लिका प्रथमसङ्गमे मूर्च्छिता भविष्यतीति । तस्मादाश्वासयामः ।]

**मारुतः** – अन्यदपि दारुणं श्रावयिष्यामि ।

**कलकण्ठः** – (साशङ्कं) किमिव ?

**मारुतः** – अथ तस्मिन् क्षणे,

तां पेतुषीं लुलितविह्वलगात्रमङ्के
हा हा किमेदिति यावहदं बिभर्मि ।
तावद्विमोहकरणं[1] मम नैव जाने
भूतेन केनचिदपहियते स्म बाला ॥ 50 ॥

[2](इति मोहं नाटयति)

**कलकण्ठः** – (सबाष्पं धारयन् )

हन्त, तत्प्रयुक्त एव प्राग्दष्टः संक्षोभोऽपि ।

**नवमालिका** – हा पिअसहि मल्लिए ! देहि मे वअणम् !

[हा प्रियसखि मल्लिके ! देहि मे वचनम् !]

(इति छिन्नपातं पतति)

**कालिन्दी** – हा हदअदेव्व, सअं एव्व वड्ढिदा लदा कहं णु फलसमए लूणा !

[हा हतकदेव ! सत्यमेव वर्धिता लता कथन्नु फलसमये लूना !]

---

1. ° ह्य, $मु_2$, $त_2$ 2. $त_2$ omits from इति to पतति ।

(इति नवमालिकां धारयति)

**रमयन्तिका** – हा मन्दभाइणीए मह आअमेणच्चिअ एसो अणत्थो । हा सहि मल्लिए ! मं वि णएहि !

[हा मन्दभागिन्या ममागमनादेव एष अनर्थः । हा सखि मल्लिके ! मामपि नय !]

(इति पतति)

**मधुकरिका** – हा गहिओ[1] किअन्तेण मल्लिआमुहेण सव्वो वि बन्धुवग्गो मारुओआ[2] ।

[हा गृहीतो कृतान्तेन मल्लिकामुखेन सर्वोऽपि बन्धुवर्गो मारुतश्च ।]

(इति धारयति)

**भ्रमरकः** – हा सामिणि ! कहिं णु अणाहं दासवग्गं उवक्खिअ गआसि ।

[हा स्वामिनि ! कथन्नु अनाथं दासवर्गमुपक्षिप्य गतासि !]

(मारुतः संज्ञां लभते)

**सारसिका** – (नातिशोकं, स्वगतं)

मण्णे अहं एसो जो अविज्जापहावो भअवदीएत्ति ।

(प्रकाशं)

महाभाअ, णादिसम्भमो कादव्वो । भअवर्दि दट्ठूण सव्वं कप्पइस्सामो ।

---

1. om गहिओ, $मु_2$, $त_1$, $अ_1$    2. मारिओ [मारितः], $मु_2$

[(नातिशोकं, स्वगतं) मन्ये अहं एष योगविद्याप्रभावो भगवत्या इति । (प्रकाशं) महाभाग, नातिसंभ्रमः कर्तव्यः । भगवतीं दृष्ट्वा सर्वं कल्पयिष्यामः ।]

**कलकण्ठः**- युक्तमाह सारसिका । तद्गच्छामो भगवतीमन्वेष्टुम् ।

**मारुतः** - (सबाष्पं)
यद्भवद्भ्यो रोचते ।

(इति निष्क्रान्ताः सर्वे)

उद्दण्डं रङ्गनाथः सुतमलभत यं रङ्गदेवी तथाम्बा
त्रैविद्येशो महर्षिर्निरवधिमहिमा यद्धिते जागरूकः ।
तस्य श्रीविक्रमाज्ञाबहुमतिरचिते मल्लिकामारुतेऽस्मि-
न्निर्वृत्तश्चाष्टमोऽभूत्प्रकरणतिलके निष्कलङ्कोऽयमङ्कः[1]॥



1. मु$_1$ **omits the verse; reads** इति अष्टमोऽङ्कः ।

## ॥ नवमोऽङ्कः ॥

(ततः प्रविशति सारसिका)

**सारसिका** – (सोच्छ्वासं)

दिट्ठिआ जोअविज्जापहावादो [1]परोक्खबोहसत्तीए[2] भअवदीए जम्मंदरे कुविदस्स महेसिणो [3]सावोवट्ठिअमुच्छामुसिअकरणा मल्लिआ झत्ति कञ्जीउरं णोदा। तहिं चिअ सिरिका- मच्छीप्पसादासादिअसीमन्तमणिप्फरसमेत्तणिहुणिअमोहा अइरेणेव्व समएण पुणो पच्चाणीदा अ।

(सानुतापं)

मारुओ उण ताणि ताणि मङ्गलेदराणि आसङ्कमाणो मए उण बहुसो णिवारिदो वि मणिऊड- तडेसु कलअण्ठदुईओ सोअपज्जाउलो परिहिण्डइ। णोमालिआमुहो सहीअणो वि देसु एव्व पदेसेसु।

(सोच्छ्वासं)

इदो वरं ताणं वि मुहुत्तपरिमिदं एव्व वसणम्। जदो भअवदी एहिं कञ्चीउरादो आअच्छन्ती एव्व एत्थ अस्समे मम्मुहादो मारुअस्स अण्णाणं अ वसणं सुणिअ तेणव्व जोअविज्जापहावेण मणिऊढं

---

1.° विज्जावहसिओहि [°विद्यापहसितबोधि], $मु_2$, $त_1$

2. सत्ताए, $मु_1$

3. तत्तो पल्लवतप्पावो सा वो [तस्मात् पल्लवतल्पात् शापोप- स्थित °], $मु_2$, $त_1$, $के_3$, $के_4$, $के_5$, $अ_2$

एव्व मल्लिअं णीदवदी । अहं वि अवच्चसो विट्ठलं अम्मच्चवीसवसुकुडुम्बं आसासेमि ।

(नभो विलोक्य)

हुं पवुट्टो एव्व तमालजालसिणिद्धजल-हरपरिणाहकवलिअंवराभोअदंसणमेत्तविहडन्त विरहि-जणाउसो पाउसो । ता मुहुत्तपरिमिदं वि मारुअस्स महन्तं वसणं सङ्केमि ।[1]

[दिष्ट्या योगविद्याप्रभावात् परोक्षबोधिशक्त्या भगवत्या जन्मान्तरे कुपितस्य महर्षेः शापोपस्थित-मूर्च्छामुषितकरणा मल्लिका इटिति काञ्चीपुरं नीता । तस्मिंश्च श्रीकामाक्षीप्रसादासादितसीमन्तमणि-स्पर्शमात्रनिर्धूतमोहा अचिरेणैव समयेन पुनः प्रत्यानीता च । (सानुतापं) मारुतः पुनः तानि तानि मङ्गलेतराणि आशङ्कमानो मया पुनः बहुशो निवारितोऽपि, मणिकूटतटेषु कलकण्ठद्वितीयः शोकपर्याकुलः परिहिण्डते । नवमालिकामुखस्सखी-जनोऽपि तेष्वेव प्रदेशेषु । (सोच्छ्वासं) इतः परं तेषामपि मूहूर्तपरिमितमेव व्यसनं, यतो भगवती इदानीं काञ्चीपुरादागच्छन्त्येव अत्राश्रमे मन्मुखात् मारुतस्य अन्येषाञ्च व्यसनं, श्रुत्वा तेनैव योगविद्याप्रभावेण मणिकूटमेव मल्लिकां नीतवती । अहमप्यपत्यशोकविह्वलं अमात्यविश्वावसुकुटुम्ब-माश्वासयामि ।

---

1. वरिसो, मु,

(नभो विलोक्य)

हुम्, प्रवृत्त एव तमालजालस्निग्धजलधर-परिणाहकवलिताम्बराभोगदर्शनमात्रविघटमान-विरहिजनायुषः प्रावृट् । तस्मान्मुहूर्तपरिमितमपि मारुतस्य महान्तं व्यसनं शङ्के ।]

(इति निष्क्रान्ता)

।। प्रवेशकः ।।

(ततः प्रविशति मारुतः कलकण्ठश्च)

**कलकण्ठः** - (सकरुणं)

नैवोपायान् गणयति तथाऽगोचरे विक्रमाणां
वैलोम्येस्मिन्नहह नियमादेधमाने विधातुः ।
क्रूरातङ्कक्रकचविदलद्धैर्यसारा बतामी
संसीदन्तो व्यसनदहने कूलपातं पतामः ।। 1 ।।

**मारुतः** - (सकरुणं, निश्वस्य)

हा प्रिये, कां अवस्थां प्रपन्नाऽसि ?

तन्वङ्गि दर्शय तदङ्गजसार्वभौम-
माङ्गल्यदाममधुरं वदनेवन्दुबिम्बम् ।
किं नेक्षसे महति सन्तमसे पतन्तं
अन्धंभविष्णुसकलेन्द्रियमात्मदासम् ।। 2 ।।

**कलकण्ठः** - हन्त भगवत्यपि न ज्ञायते क्व गतेति ।

(ईषत्सोच्छ्वासं)

अथवा,

परमवलम्बोऽस्माकं भगवत्यन्वेष्टुमगमदित्याशा ।
पतताभगाधकूपे पारे रूढेव तृणवल्ली ॥ 3 ॥

**मारुतः** –

हा मज्जीवितमल्लिके क्व नु गतं दासे मयि प्रेम तत्
त्यक्त्वा मामशरण्यमार्तमदये क्व त्वं गताऽसि स्वयम् ।
पृच्छ त्वं कलकण्ठमुद्भ्रमति मे चेतो धृतिर्ध्वंसते
चूडायामयमञ्जलिर्मधुरया वाचा सकृत् सँल्लप ॥ 4 ॥

(सबाष्पातिशयं)

कथमङ्कस्थितैव गताऽसि !

स्मरामि तव तत्प्रिये जघनभारमन्दं गतं
सखीवचनकाकुभिः तदपि सस्मितं व्रीडितम् ।
चलाचलकनीनिकातरलनोत्तरङ्गं च तद् –
विलासशतमन्थरं वलितकन्धरं वीक्षितम् ॥ 5 ॥

**कलकण्ठः** – (सस्मितं)
हन्त, केनोपायेन वयस्यमाक्षिपामि) ।

**मारुतः** –(सकरुणाक्रन्दं)

हा शृङ्गार रसाधिराज करुणो जातोऽसि हास्योऽथवा
हा कन्दर्प हतो मदस्तव धनुः सन्यस्य गच्छाटवीम् ।
हा [1]भूचक्र परिष्कृतिस्तव गता द्यामत्यशेथा यया
हा विश्वस्य विलोचनानि मुषितं तद्धस्तपस्याः फलम् ॥ 6 ॥

(निश्वस्य)

1. भ्रू °, मु[1]

अयि दयितमारुते मल्लिके, कुतो मामकाण्ड एव परित्यजसि ? कमपराधं पश्यसि ?

(विमृश्य)

भवतु । ज्ञातम् ।

अव्याजविभ्रममयैरनवद्यहृद्यै-
रम्लानचम्पकविलासधरैर्यदङ्गैः ।
मन्मूलमङ्गजरुजा चिरमन्वभावि
मन्ये मनस्विनि ततस्त्वममर्षितासि ॥ 7 ॥

(सोपालम्भं)

यद्येवं, किं न जानासि, त्वद्दर्शनतः प्रभृति अनितरसाधारणीमवस्थाम् ।

मत्वालापं तव पिकवधूकूजितेषून्मनाये
नेत्रच्छायाप्रणयिषु रमे दीर्घिकेन्दीवरेषु ।
प्रत्युद्गच्छाम्युपवनतले सस्मितां त्वां विशङ्क्य
प्रत्यग्रोद्यत्कुसुमकलिकां बालमन्दारवल्लीम् ॥ 8 ॥

अपि च,

त्वद्वीक्षासु निमेषकर्म मनुते दृष्टिर्दृढामर्गलां
त्वन्नामाक्षरमेव वक्ति रसना वाक्यान्तरे प्रस्तुता ।
त्वत्सङ्कल्पसमागमेष्वपि घनोत्तुङ्गस्तनालिङ्गने
वक्षो मे व्यवधानदानपरुषान् हारानपि ध्यायति ॥ 9 ॥

(आकाशे)

भगवति मन्दाकिनि, त्वमपि कथं न लक्ष्यसे[1] ? अथवाऽवगतमेव ।

---

1. लक्षयसि, मु,

परमवसितां प्राणेनापि प्रियां बत मल्लिकां
स्वयमनुयती[1] शोकावेगाद्धपुष्यपि निस्पृहा ।
नयनसलिलैः श्यात्कुर्वाणे ध्रुवं निजधारणा-
बलसमुदिते भस्मीभूतासि योगहुताशने ।। 10 ।।

**कलकण्ठः** – कष्टं भोः ।

क्षिप्ताः पातालकुक्षौ किमु किमु निरये यन्त्रिताः[2] किं प्रविष्टाः
मृत्योरास्ये निमग्नाः किमु निबिडतमे वाडवे धूमचक्रे ।
विद्मो नो दुर्विभाव्ये तमसि निपतिताः क्वापि कर्तव्यमूढाः
नद्याऽऽवर्तानुघूर्णल्लघुतृणकणिकानिर्विशेषा भ्रमामः ।।11।।

(मारुतं प्रति)

वयस्य, समवस्थापयात्मानम् । ननु श्रूयते धैर्येण विपदस्तीर्यन्त इति ।

**मारुतः** – (निश्वस्य)

या मय्याविशति प्रवालशयनं द्राग्दाहभीत्याकुला
मा मा साहसमार्यपुत्र रचयेत्यामुग्धमाभाषिणी ।
आलम्बिष्ट करेण कङ्कणजुषा चेलाञ्चले तादृशीं
प्रच्याव्याङ्कगतां रमामिव कथं धैर्यं धरेयं सखे ।।12।।

अपि च, तस्मिन् मन्दारमूले,

परपरिणये ज्ञाते प्राणाञ्जिहासुरशङ्कितं
प्रियसहचरीबुद्ध्या प्रेमाकुलं परिरभ्य माम् ।

1. अवयती, $मु_2$, $त_2$, $के_1$ 2. निरयेष्वर्पिता, $के_1$, $अ_1$

विलपितवती यद्यद्बाला सगद्गदिकाक्षरं
परिसरजुषा तत्तत्सर्वं त्वयापि सखे श्रुतम् ॥13॥

आवेगं नाटयन्, हा!

किमपि करणद्वाराण्यन्धन्तमः पिदधाति मे
भ्रमति हृदयं मोहाविष्टं विषीदति जीवितम्।
अहह[1] सहसा सर्वाङ्गीणः प्रसर्पति कश्चन
प्रलयशिखिना तुल्यस्तापः सखे करवाणि किम् ॥14॥

**कलकण्ठः** – (स्वगतं)
हन्त, न शक्नोमि वयस्यमन्यत्राक्षेप्तुम्। भवतु। इदमेव प्रावृडारम्भरामणीयकं दर्शयन्नीषद्विनोदयामि।

(प्रकाशं)

सखे ननु सर्वार्तिहरोऽयं समयः। पश्य–

अमीभिराखण्डलचापमण्डितै–
स्तटिन्नटीताण्डवरङ्गमण्डपैः।
निचोलितं व्योम समीरणेरितै–
स्तमालमालामलिनैर्बलाहकैः ॥ 15 ॥

वयस्य, पश्य पश्य।

अमी किमपि वासरा प्रसुवते मुदं देहिनां
विजृम्भिनवकन्दलीदलनिलीनपुष्पन्धयाः।

---

1. add तु, $त_2$ ; ह °, $मु_1$

पयोदमलिनीभवद्गगनदर्शनप्रोच्चल
त्कृषीवलविलासिनीनयनकान्तितापिञ्छिताः ॥16॥

परितो दर्शयन्,

इह गिरिकटकेषु प्रौढजीमूतगर्जा-
स्फुटदलितविदूरक्षौणिचित्रीयमाणाः ।
प्रियसख तव दृष्ट्योः प्रीतिमुद्दामयन्तु
स्फुटितकुटजमालोद्गन्धयः काननान्ताः ॥17॥

अथवा,

बलादाकृष्टेऽपि[1] स्वयमपि मनस्ते करिघटा-
करास्फालातिम्यद्धनशकलकीर्णा गिरिभुवः ।
मदक्रीडत्केकिस्वनचकितवल्मीकनिपत-
त्फणिश्रेणीचूडामणिकिरणकिम्मीरककुभः ॥ 18 ॥

अपि च,

आमूलकुड्मलितबालकदम्बजाल-
व्यालोलनोद्गलितधूलिमिलद्द्विरेफम् ।
पौरस्त्यमाकलितबर्हिणबर्हभारं
सेवस्व सर्वपरितापहरं समीरम् ॥ 19 ॥

**मारुतः** – (परितो विलोक्य, सावेगं)
वयस्य, स एष दिङ्मूढस्य उन्मादावतारः
यत्प्रियजनवियुक्तस्य प्रावृडारम्भः ।

---

1. आकर्षेयुः, मु$_2$

जलदनिनदत्रस्यन्मुग्धाङ्गनास्वयमर्पित-
स्तनतटपरीरम्भक्रीडाप्रहर्षुलकामुके ।
कुपितमदने काले केकाकुलप्रचलाकिनी
क्षणमपि कथं प्राणित्वेष प्रियाविरही जनः ॥20॥

अपि च,

एते प्रेङ्खोलयन्तो वियति घनघटोपान्तलोला बलाकाः
धाराम्भश्चूर्णयन्तः सकरकमभितश्चातकीपीतशेषम् ।
सह्येरन्पूर्ववाताः कथमिव पथिकप्रेयसीहस्तपाली-
विन्यस्तापाण्डुवक्त्राम्बुजगलितघनश्वासहस्तावलम्बाः॥21॥

(नभो विलोक्य, सकरुणं)

हा प्रिये मल्लिके !

तदर्शयस्व तव काञ्चनकर्णिकार-
कर्णेजपप्रभमतन्द्रिगात्रि गात्रम् ।
एषा पुनस्तत इतो गगने स्फुरन्ती
सौदामिनी भवतु संप्रति लब्धलज्जा ॥ 22॥

(पुरतो विलोक्य)

लम्बन्ते भ्रमराः कदम्बमुकुले

(सकरुणं)

हा मेचकाः कुन्तलाः

सम्माद्यन्ति चकोरकाः प्रतिवनं

(सबाष्पं)

हा मन्थरे लोचने ।

(अन्यतो[1] दृष्ट्वा)

विष्वक्फुल्लति मालतीसुरभिला

(सशोकं[2])

हा मुग्धमन्दस्मित

व्याप्तं शाद्धलमिन्द्रगोपनिवहैः

(साक्रन्दं)

हा ताम्रबिम्बाधर ॥ 23 ॥

(इति मूर्च्छति)

**कलकण्ठः** – (सकरुणं)

किमेतत् ? धिक्, कृतान्त ! कथमेकान्त-
निष्ठुरोऽसि

(सबाष्पं)

हा धिक्, कष्टम् ।

किं वज्रसार शतधा न विशीर्णमासी-
द्यद्यापि ते हृदयमाः [3]कठिनोऽथवाहम् ।
पश्यन्नपि प्रियसखस्य तथैव वर्ते
[4]यच्छोकमोहमुकुलन्नयनं मुखेन्दुम् ॥ 24 ॥

हन्त,

(जलधरारम्भं वर्णयन्)

---

1. अपरतो, $अ_1$, $म_1$ 2. सनिश्वासं, $अ_1$

3. अद्यापि चित्तकठिनोस्म्यथवाऽहमेव, $मु_2$, $त_2$, $के_1$, $के_2$ **All other mss. and ed. read the text as ° कठिनोत्थवाहम् ।**

4. ° यक्षेण, $मु_2$, $त_2$

हतकोऽहमेव कारणमस्मि ।

(नभो विलोक्य)

जलधर जलधर मन्मथ मन्मथ पवमान पवमान ।
सर्वान् वः प्रणतोऽहं प्रियसुहृदो जीवितं भिक्षा ॥25॥

(मारुतः प्रबुध्यते)

**कलकण्ठः** – (सोच्छ्वासं)
एष मत्प्रार्थितोऽभ्येत्य मारुतो मारुतं शनैः ।
ऐकशब्द्यदिव स्निह्यन् शीकरैः सममोमुदीत्[1] ॥ 26 ॥

**मारुतः** – (सोन्मादं)
कोऽयं देशः सुभगविपिनः सैषभूभृन्नितम्बः
कोऽहं बाष्पप्रचुरवदनो नन्वहं मारुतोऽस्मि ।
किं बाष्पं मे[2] मनसि करुणस्तायते को विभावः[3]
कस्मादेषोप्यहह मुषिता प्रेयसी मल्लिका मे ॥ 27 ॥

**कलकण्ठः** – (सावेगं)
कथमुन्माद इव ?

**मारुतः** – यावदिह वने अन्वेषयामि ।

(सत्वरमुत्थाय प्रचलति)

**कलकण्ठः** –सत्यं ग्रस्यत एव मारुतः उन्मादकालसर्पेण ।
कठिनकलकण्ठ ! [4]कथमद्यापि जीवसि ?

---

1. ° बूबुधत् , $मु_2$, $त_2$, $के_1$ 2. बाष्पाये, $मु_2$, $त_2$
3. कोऽपि भावः, $मु_2$ 4. किं, $मु_1$

**मारुतः** – (परितो दृष्ट्वा)

हन्त सर्वतो रमणीयेषु प्रदेशेषु कतमं भागं प्रथममन्वेषयामि ?

(हस्तेन दर्शयन्)

एषु रक्तकदम्बगुच्छलाञ्छनेषु न संभाव्यत एव ।

अत्र क्वचित्गिरिनदीतटसैकतेन
बाला मरालललितं यदि सञ्चरेत ।
श्रोणीभरालससलीलपदक्रमोत्थं
श्रूयेत मञ्जुविरुतं मणिनूपुरस्य ॥ 28 ॥

**कलकण्ठः** – अहो अहो परां कोटिमारूढ उन्मादस्य । यतस्तथाविधं तस्याः नाशं विस्मृत्य अन्वेष्टुं प्रवर्तते । भवतु । अहमपि एतदेवानुवर्ते ।

**मारुतः** – (कर्णं दत्वा, सहर्षं)

सखे, अप्रमत्तः सव्यतः कर्णं प्रयच्छ ।

इह [1]वनकरिदानोद्गन्धिवीचीकुलस्य
द्रुमगहननिगूढे कूलभागे ह्रदस्य ।
नखनिहतविपञ्चीपञ्चमस्वानमुग्धां
गिरमविशदवर्णां स्निग्धकण्ठ्याः शृणोमि ॥ 29 ॥

(सोपालम्भं)

अस्मानुपेक्ष्य घनदारुणशोकदीना-
न्मुक्त्वा सखीरपि सबाष्पकृतप्रलापाः ।

1. नव, मु₁, म₁, के₁, अ₁, त₁, मै₁

पद्भ्यां कुशेशयादपि कोमलाभ्यां
मुग्धा कथं चरति शैलतटे मृगीव ॥ 30 ॥

**कलकण्ठः** – (स्वगतं)

हन्त, कोकिलस्वरेण[1] भ्रमति वयस्यः ।

(प्रकाशं)

नहि नहि मल्लिका सल्लपति । एषा तु [2]पचेलिमजम्बूफलखण्डप्रहृष्टायाः कूजा कोकिलवध्वाः[3] । न सखे सख्याः स्वरः, स हि स्निग्धः ।

**मारुतः**– (सविषादं)

किं पिकवधूकूजितमेतत् ? हन्त स्फुटेऽपि वैसादृश्ये भ्राम्यतः मम कर्णौ ।

दृषदामपि दर्शितद्रवत्वा-
त्प्रतिवर्णं क्षरितामृता श्रवस्सु ।
स्वरसंपदनिन्दिता सुकण्ठ्याः
कथमेवं परुषा मम प्रियायाः ॥ 31 ॥

(सनिःश्वासं)

कस्य मुखात्प्रियतमाप्रवृत्तिमुपलप्स्ये ?

(दृष्ट्वा, सकौतुकं) एषः,

---

1. add परि °, मु$_2$,त$_2$,मै$_2$,के$_2$ 2. कोकूया पिकवध्वा, मु$_2$, मै$_2$,
3. क्वे नु प्रिया पिकवध्वाः,त$_1$, त$_2$

[1]शफरीपरिवृत्तिलोभनीयप्रचलद्वालतरङ्गमालभारी ।
असकृद्वनदेवतावगाहैः परिपूतः पुरतो ह्रदश्चकास्ति ॥32॥

यावदेनं पृच्छामि ।

(उपसृत्य)

ह्रद ह्रदयहरे ते निम्ननाभीह्रदास्मि-
न्पयसि सहचरी मे स्नातुकामाऽवतीर्णा ।
अपि चटुलमृगाक्ष्या श्चक्षुषोश्चातुरीभिः
प्रतिलहरिवितीर्णाः काचिदन्याश्च शय्याः[2] ॥ 33 ॥

(कर्णं दत्वा)[3]

कथमदत्तोत्तरस्तूष्णीं तिष्ठति[4] ? मन्ये स्नातुमवतीर्णेव अगाधे पयसि मग्नेत्यप्रियावेदनाद्विरमति ।

(विलोक्य, सावेगं)

वयस्य, महान् प्रमादः । सत्यं मग्नैव पयसि प्रेयसी । बोधयति च अस्मान् ।

इयं सा विक्षिप्ता वियति धवला हारलतिका
पुरा मालां लब्ध्वा कुवलयदृशे यामहमदाम् ।
यया प्राप्तं तन्व्याः किमपि तदनङ्गानल[5]रुजा
विपाण्डुप्रोत्तुङ्गस्तनकलशदोलायितसुखम् ॥ 34 ॥

(पुनर्विलोक्य, ससंभ्रमं)

---

1. om शफरी, $मु_1$
2. काचिदन्याः शफर्यः, $मु_2$, $त_2$
3. om कर्णं दत्वा, $मु_1$, $म_1$, $के_2$
4. आस्ते, $म_1$, $मु_2$, $त_2$, $अ_1$, $के_1$
5. °नल, $त_2$, $अ_1$

वयस्य, न सा मग्ना । इदानीं तु मज्जति ।

एतत्तदिन्दुपरिपन्थिमहेन्द्रनील-
सौन्दर्यचौर्यचतुरैरलकैः सनाथम् ।
आकण्ठमग्नवपुषो हरिणेक्षणाया
हा हन्त पश्य मुखमम्बुनि कम्पमानम् ॥ 35 ॥

(उच्चैः)

प्रिये मा भैषीः । अयमहमुद्धरामि ।

**कलकण्ठः** –(स्वगतं)

हन्त, सर्वत्र सदृशवस्तुषु भ्रमति वयस्यः ।

(प्रकाशं)

सखे, ननु चक्षुस्ते कर्णपथमवगाहते ।

**मारुतः** – किमेषोऽपि भ्रम एव ?

(निर्वर्ण्य, सविषादं)

एष[1] व्योमनि मानसं जिगमिषुः हंसालिरुड्डीयते
चञ्च्वग्रैश्चरणैश्च विद्रुमरसैः क्षिप्ता न मुक्तावलिः ।
एतच्चाम्बुनि वीचिवेगतरलं कूजद्भिरिन्दिन्दिरै-
र्नालीकं न पुनर्घनालककुलं वक्त्रं चकोरीदृशः ॥36॥

तदन्यतः पश्य[2]–

(परिक्रम्य, सहर्षं)

1. एषा. $मु_2$, $त_2$, $के_2$ 2. पश्यामि, $त_1$, $त_2$, $मै_1$, $मै_2$, $के_1$, $अ_1$

[1]प्रथमजलधरधारासेकोच्छ्वसितसुरभिलकटकस्थला-
लङ्कारस्य तमालतरोः मूले[2]-

मदमुकुलितापाङ्गे बिभ्रद्दृशौ मधुपिङ्गले
परिसरझरीझात्कारेषु क्षणं निभृतश्रुतिः ।
धवलपृथुले दन्ते शुण्डालतां विनिवेशय-
न्गिरिरिव गिरिं रुन्धन् गन्धद्विपोऽयमुदीक्षते[3] ॥37॥

यावदेनं पृच्छामि ।

(उपसृत्य)

करिपते कथय क्व मम प्रिया
यदि दृशोस्तव मार्गमुपागता ।
गिरितटीषु झरीषु वनीषु वा
कुररिकेव बतार्तविलापिनी ॥ 38 ॥

(सहर्षं)

एष क्षणं स्तम्भितः[4] श्रुणोति सादरं मे वाचः[5] ।

परितस्ताण्डवितनीलकण्ठषण्डेन स्तनित-
गम्भीरेण गर्जितेन प्रतिवक्ति च ।

(सविनयं)

---

1. add अत्र, के$_1$, के$_2$, अ$_1$ 2. om मूले, मु$_1$, त$_1$, मै$_1$, मै$_4$
3. उदीक्ष्यते, मु$_2$, त$_2$, मै$_2$, अ$_1$, के$_2$
4. क्षणस्तम्भितकर्णतालः, मु$_2$
5. वचनं, मु$_2$, मै$_1$, अ$_1$

गजराज, किमात्थ, कानि तस्याः लक्षणानीति ?
तर्हि श्रूयताम् ।

त्वत्कुम्भोपमविभ्रमः कुचभरस्त्वद्या[1]नखेलं गतं
त्वच्छुण्डासममूरुकाण्डमपि तु स्पृष्टं न कार्कश्यतः ।
शाणोल्लीढसुवर्णदर्पणतलस्वच्छे कपोले सखे
त्वद्दन्तप्रथमप्ररोहधवला जागर्ति काचिच्छविः ॥ 39 ॥

(निर्वर्ण्य, सविषादं)

कथं मुकुलितनयनमुदास्ते ममाभ्यर्थितम् ।
हन्त, तदेतद्गजनिमीलितं नाम

(सनिर्वेदं)

अहो दुर्ललितः खलजनः ।

प्रणयवचनमर्थिभिः प्रयुक्तं
यदयमहो न शृणोति दुर्मदान्धः ।
अथ कथमपि चेत्करोति कर्णे
नयननिमीलितमुत्तरं विधत्ते ॥ 40 ॥

तदन्यमभ्यर्थये ।

(पदान्तरे स्थित्वा)

एष प्रकटदृष्टापराधः प्रणयकोपदुरुसर्पां प्रेयसी-
मनुवर्तते खिन्नमतिरन्यो मतङ्गजतरुणः ।

(सस्मितं) इयं खलु

1. यातः°, मु$_2$

आदत्ते प्रणयार्पितानपि मुहुर्नो सल्लकीपल्लवा-
न्कुम्भस्पर्शपरं निरस्यति करं शूत्कुर्वती शुण्डया ।
प्रत्याख्याति पराङ्मुखी नयनयोर्हस्ताग्रकण्डूयनं
पत्युर्नानुनयं प्रतीच्छति वशा मानस्य याता वशम् ॥41॥

अतो नोचितमत्र प्रार्थनकदर्थनम् ।

(अन्यतो दृष्ट्वा)

एतत् पारिप्लवनयनप्रभेन्दीवरितहरिन्मुखं हरिणीवृन्दं इतः प्रतिष्ठते । तदस्मिन्नन्यतमां हरिणीं प्रवक्ष्यामि । स्त्रियः खलु स्त्रीवृत्तान्तपरिज्ञाने सविशेषमाग्रहिण्यः ।

(विलोक्य)

कथं प्रचलत्यपि यूथे मत्प्रार्थितश्रवणाय एका विलम्बते ।

एषा पुनः प्रणयिना परिभुग्नकण्ठं
प्रेमप्रसारितदृशा परिपाल्यमाना ।
आस्ते स्तनन्धयविवल्गितदत्तदृष्टि-
राक्रान्तशर्करिलशैलतटा कुरङ्गी ॥ 42 ॥

(निर्वर्ण्य)

अति हि नाम लोभनीयमेतासां कातरस्निग्धप्रेक्षितम्। मन्येऽत्र कश्चिद्गिरिकन्दरलतामन्दिरेषु सन्निहिता पाठयति पक्ष्मलाक्षी ।

(सनिश्चयं)

एणीनां [1]चकितविलोकितोपदेशे
वामाक्षी प्रभवति सैव मल्लिका मे ।
शिष्यस्थं गुणमवलोक्य लोककान्तं
विद्वद्भिर्गुरुरपि तद्गुणो हि कल्प्यः ॥ 43 ॥

पृच्छामि तावत् ।

सारङ्गि ! शंस गमनोन्मुखि[2]- जीवनथा
सा मे विभूषयति सम्प्रति कं प्रदेशम् ।
योपादिशत्स्म तव[3] कातरकातेरक्षा[4]-
माचार्यकीं[5] नयनचङ्क्रमचातुरीणाम् ॥ 44 ॥

कथमदत्तोत्तरा सह तर्णकैः प्रस्थितैव । किमनादरकारणमस्याः? किं प्रियया सह सङ्घर्षः?

(सवितर्कं)

लब्ध्वा कियन्तमपि नेत्रगुणं प्रियायाः
स्पर्धां तयैव हरिणाः कथमादधीरन् ।

(विमृश्य, सनिंश्चयं)

स्पष्टं तदेतदथवा भजते यदस्याः
वक्त्रद्विषं हिमकरं कुलमौलिरेषाम् ॥ 45 ॥

---

1. चतुर °, के$_1$, अ$_1$ 2. सहसा सखि, मु$_2$, त$_2$, अ$_1$
3. यावत्स्वयं व्यधित °, मु$_2$, त$_2$, मै$_1$, अ$_1$
4. कातराक्ष्या, म$_1$; कातराणां, त$_2$, अ$_1$, के$_1$
5. आचार्यकं, मू$_2$, त$_2$, अ$_1$, के$_2$

उपालभे तावत् । भो भोः, हरिणवंश्याः । मा गर्वन्तु । भवन्तो मल्लिकायाः लोचन-सौभाग्यसर्वस्वहारिणो[1] वयमिति ।

कातर्यं पक्ष्मलतावैपुल्यं स्निग्धतेति तन्वङ्ग्याः ।
प्राप्ताः[2] कोऽपि विशेष दुष्प्रापा विभ्रमास्तु नाभ्यस्ताः ॥ 46 ॥

**कलकण्ठः** – (सकरुणं)

हन्त, परां काष्टामधितिष्ठति वयस्यः उन्मादस्य । यत् तिरश्चोऽपि प्रार्थयते अचेतनानप्याभाषते । हा कष्टमेतावती मम मारुतप्रत्याशा । धिङ् नाम मम जीवितं, यदेवंगते प्रियसुहृदि स्वयमेव न भिद्यते ।

(सोपालम्भं)

यस्य त्वमेव परमाप्तमभूरसुभ्यः
स्वेभ्योऽपि यश्च तव सम्मत आत्मनोऽपि ।
उन्मादलङ्घितमताविति नाम तस्मिन्
हा मूढजीवित, कियच्चिरमासितव्यम् ॥ 47 ॥

(मारुतं विलोक्य)

हन्त, दयनीयमेतत् ।

मत्वा मृगान् प्रणयतो विमुखान् समन्यु-
र्निःश्वस्यदीर्घमवसन्नशरीरमास्ते ।
निर्वेदशोकपरितापपरिप्लुतेन
वक्त्रेण बाष्पकलदीनविलोचनेन ॥ 48 ॥

---

1. °ग्राहिणो, के$_2$ 2. पठिताः, मु$_2$; परिताः, त$_2$, मै$_1$, मै$_2$,अ$_1$

(आकाशे, साक्रन्दं)

कथमसि मल्लिके करुणया विधुरा किमपि
प्रियसखि पश्य पश्य घनबाष्पमिदं वदनम् ।
कमल इवालिपङ्क्तिरपतद्धत यत्र पुरा
विकसितमन्दमुग्धमधुरा त्वदपाङ्गततिः ॥ 49 ॥

**मारुतः**- हा किं करोमि ? न दृश्यते प्रियतमा ।

(सधैर्यं)

भवतु पुनरपि अन्विच्छामि । श्रूयते[1] अनिर्वेदः परमो हेतुः श्रेयस इति ।

(पदान्तरं गत्वा, सकौतुकं)

इदं जम्बूकुञ्जस्खलितजलझात्कारलहरी-
गभीरायाः सिन्धोर्मुदितविहगध्वानिनि तटे ।
क्रमोद्गाढानङ्गज्वरविधुरकर्णाटयुवती[2]-
कपोलापाण्डु द्रागदलति रुचिरं कैतकदलम् ॥ 50॥

(साकूतं)

इदमभिनवोद्भेदस्वच्छामलद्युतिकेतकी-
दलमधिशिखाद्रोणिक्रीडन्मदान्ध[3]मधुव्रतम् ।
स्मरयति पुरा पश्यन्त्या मां विनीलकनीनिका-
लुलितलुलितप्रान्तां वामभ्रुवो विशदां दृशम् ॥ 51 ॥

तदेनं विशिष्टगन्धप्रियं भृङ्गराजं पृच्छामि ।

---

1. **add** हि, $मु_1$ 2. ° महिला, $म_1$, $मु_1$, $के_1$, $अ_1$
3. **मदान्ध°**, $मु_2$, $के_2$

(अभिमुखं स्थित्वा)

मधुकर मदिराक्षी मे दृष्टा विपिने त्वया भ्रमता ।
अपि पारिजातसौरभमवनिजुषा प्राप्तमाननस्पर्शात् ॥ 52 ॥

(कर्णं दत्वा)

कथमनाद्रियमाणः सगर्वं गायति ? भवतु । तथा प्रियापाङ्गस्मारणमेनमसूयामि ।

(पदान्तरे स्थित्वा)

कथमत्र रक्तकदम्बे प्रफुल्लेष्वपि पुष्पस्तबकेषु पल्लवमधिशेतेऽन्यो भृङ्गयुवा ?

(निर्वर्ण्य, सानुकम्पं)

न पिबति[1] सविधेऽपि स्पन्दमानं मधूलिं
न मिलति सह यूथ्यैर्नो कलं झङ्करोति ।
न च मरुदुपनीतैर्मोदते पुष्पगन्धै-
स्तदयमपि तपस्वी कान्तया विप्रयुक्तः ॥ 53 ॥

नैतं[2] प्रवक्ष्यामि[3] ।

(निर्वर्ण्य, सहर्षं)

इयमनतिदूरवर्तिनः [4]कन्दलीकुसुमादागतैव विरहपीडिताङ्गी भृङ्गी ।

श्लिष्यति हृष्यति पश्यति चुम्बति गायत्यनङ्कुशप्रेमा ।
प्रत्यागतां द्विरेफः प्राप्य प्रणयाकुलां दयिताम् ॥ 54 ॥

---

1. धयति, $म_1$, $त_1$, $त_2$, $अ_1$, $के_2$
2. ° एनं, $त_2$, $के_2$
3. प्रक्ष्यामि, $मु_2$, $त_2$, $के_2$
4. कदली, $मु_1$

दृष्ट्वा चैतत्पूर्वेद्युः निशावृत्तान्तः स्मर्यते ।
तथाहि तस्मिन्समये,

पाल्लवं तलिममास्थिते मयि प्रापदिन्दुवदना मदन्तिकं

(पुनः स्मरणमभिनीय, साक्रन्दं)

हा हतोऽस्मि ननु तत्क्षणे दृशौ नीलनीरजरुचौ न्यमीमिलत् ॥

॥ 55 ॥

**कलकण्ठः** – हा धिक् इयन्तं समयं उन्मादतिरोहितः संस्कारः सदृशदर्शनादुद्बुद्धः ।

**मारुतः** – धिङ्मां प्रमादिनं यदुन्मत्त इव विस्मृत्य तादृशं कृतान्तनैष्ठुर्यं काननभ्रमणेन कालं क्षिपामि ।

(आकाशे)

हा प्रिये मल्लिके, कथं मया विना स्वर्गमारूढाऽसि ?

विपुलजघने मन्दं याहि क्षणं त्रिदशालये[1]
त्रिदशसरितः कूले यावन्मयाप्यनुधाव्यते ।
पदनलिनयोः केलीयानप्रकारमधीयतां
विमललहरीलोलाः वेधोरथाः द्विजजातयः ॥ 56 ॥

तत्र च,

तरन्तो जाह्नव्याः कनककमलोद्गन्धिनि जले
मरन्दे मन्दारद्रुमसुमनसां मञ्जवपुषः[2] ।
सलीलं पौलोमीकुटिलचिकुरान्दोलनपराः
शनैः सेविष्यन्ते सुमुखि भवतीं स्वर्गपवनाः ॥57॥

---

1. प्रतिपालय, $म_1$, $त_2$, $के_1$ 2. सौरभपुषः, $मु_2$

(सवितर्कं)

हन्त, विशिष्टगुणवत्मपि क्वचिदनिष्टाय । तदुपदिशामि ।

(आकाशे)

अयि[1] मल्लिके, सम्भावितनन्दनवनोपकण्ठ-सञ्चारां भवतीं किञ्चिद्वदामि ।

कल्पद्रुमावलिविलोकनकौतुकेन
मुग्धे तदुन्नमय मा मधुरं मुखाब्जम् ।
जिघ्रासमः सुरभिनिश्वसितं सहेलं
निर्धूतपुष्पमलयो द्रुतमापतेयुः ॥ 58 ॥

**कलकण्ठः** – अयमन्यः प्रकारः उन्मादस्य ।

**मारुतः** – प्रिये, अदृष्टचरे देशे कथमेकाकिनी प्रतिपालयेयमिति मा मनसि खेदः कार्यः ।

वलितवदनं भूयो भयो मदागमनोचिते
प्रहितनयनां मार्गे साक्षाद्रमामिव तस्थुषीम् ।
तत इत उपेत्यारात्प्रीत्यद्भुताकुलचेतसः
सुरयुवतयो द्रक्ष्यन्ति त्वां निमेषमुचा दृशा ॥59॥

वक्ष्यन्ति च –

सखि कथय कुतस्त्वं कस्य कान्तऽसि मा मा
बिभिहि ननु वयं ते केलिसख्यः स्म सर्वाः ।

---

1. अथ, मु$_1$

अथ सहभुव एतान् कल्पवृक्षान् दिदृक्षुः
स्वयमिह चरसि श्रीः सोदरीस्तर्कयास्मान् ॥ 60 ॥

इति[1]। किं बहुना ?

एवमादि भूयो भूयः कौतुकेन पृच्छन्तीषु तासु लज्जागृहीतकण्ठा यावत्किञ्चिदारभसे वक्तुं तावदहं झडित्यागत्य तासां सम्यगुत्तरयामि ।

(परितो विलोक्य, ससंभ्रमं)

कथमिदं भूपृष्ठमात्रगोचरं वपुर्विहाय प्रियतमासमीपं गमिष्यामि ।

**कलकण्ठः** – (सावेगं)

हन्त, किमिदमारभ्यते ? ननु भो हतविधे, किं मन्यसे ? कीदृशमिदमुन्मादं परिणमयसि ?

(साञ्जलिबन्धं)

भगवन् कुसुमायुध ! भूयोऽपि प्राक्तन-मुन्मादमावर्तयस्व । यत्र वने वने अन्वेषमाणेन प्रियवयस्येन नैतादृशमारब्धम् ।

**मारुतः** – (कर्णं, दत्वा, सहर्षं)

इयन्तं समयं प्रियतमां विहाय प्राणते मह्यं प्रकुप्यन् देवो मकरकेतन एव मदनुकूले प्रवर्तते । अयं हि–

---

1. **add** इति, मु$_1$, त$_2$

आस्फालयति मुहुर्मुहुरारोपितचण्डमौर्वीकोदण्डम् ।
आकर्ण्यते हि तात्कष्टङ्कारो मुखरयन् ककुभः ॥ 69 ॥

**कलकण्ठः** – हन्त, मधुकरझङ्कारं मौर्वीटङ्कारयति ।

**मारुतः** – यावदेनं त्वरयामि ।

(सप्रार्थनं)

तं बाणमुद्धरनिषङ्गमुखादनङ्ग-
पश्चापि वीक्ष्य यमवैष्यविकुण्ठधारम् ।
तेनैव सत्वरमसून् जहि मे दयालो
न द्विः शरं धनुषि सन्दधते हि शूराः ॥ 62 ॥

(स्मरणमभिनीय)

हन्त, लोकान्तरं यियासता मया नह्यापृष्टः प्रियमित्रं कलकण्ठः। हा सखे कलकण्ठ, क्व मां विहाय गतोऽसि ?

**कलकण्ठः** – (सबाष्पं) सखे !

नाहं गतोऽस्मि भवतश्चरणाब्जपार्श्वात्

**मारुतः** – (अनाकर्णितकेन)

शृणु ममेदं पश्चिमंवचनम् ।(इति वदन्नेव मूर्च्छां नाटयति)

**कलकण्ठः** – (सत्वरमुपसृत्य)

शेषं वचः कथय मा विरमार्द्धमुक्त्वा ।

(निर्वर्ण्य, सावेगं)

भक्तं कथन्नु खलु मामवधूय दीनं
निस्सङ्गलोकमपरं प्रति यास्यकाण्डे ॥ 63 ॥

---

1. त्वमेव, $म_1$, $मु_2$

(इति धारयन्)

हा प्रियवयस्य मारुत, पश्य मामनाथम् । हा नृशंस मकरलाञ्छन ! कथं प्रार्थितोऽहमिति प्राणान् हरसि वयस्यस्य ! चोर, किं त्वमिव त्वत्सायका अप्यदृश्या एव, ये अलक्षितपतना एव व्यापादयन्ति शरीरिणः ।

(शीतलोपचारं नाटयन्, निर्वर्ण्य)

हा हतोऽस्मि मन्दभाग्यः । अद्यापि निर्विकारं वदनम् ।

(सबाष्पं)

एतदेव तदरालकुन्तलं पेशलस्मितमुदारभाषितम् ।
पुण्डरीकदलदीर्घलोचनं पूर्णचन्द्ररमणीयमाननम् ॥ 64 ॥

(परितो विलोक्य)

हा भूधरनितम्बवासिन्यो वनदेवताः । परित्रायन्तां परित्रायन्ताम् ।

विरमत्यसावहह विश्वमङ्गलं
कलकण्ठजीवितनिबन्धनं जनः ।
यमलालयन् ललितमुग्धमल्लिका-
किलिकिञ्चित[1] स्मितविलोकितादयः ॥ 65 ॥

सखे मारुत, दिवं गतेन त्वया न चिरं प्रतिपाल्योऽस्मि ।

नाहं विलम्बकणिकामपि नाथ कुर्यां
जानामि ते पृथगवस्थितिकातरत्वम् ।

1. किमकिञ्चित, म[1]

स्वर्गं गतोऽपि सह मल्लिकया समेतो-
ऽप्युत्कण्ठसे नु कलकण्ठविनाकृतः किम् ॥66॥

अमरलोकललामभूतयोर्युवयोरस्ति च मयाऽप्युपयोगः ।

ग्रथ्नीयामलकार्पणोचितगुणां कल्पद्रुसूनैः स्रजं
लीलासाधनमास्तृणीयतलिमं बालैश्च तत्पल्लवैः ।
प्रत्यग्रोपहृतेन मन्दपवनं मन्दाकिनीजन्मना
स्वर्णाम्भोरुहिणीदलेन मृदुना सञ्चारयेयं सखे ॥ 67 ॥

(सस्नेहं परिरभ्य) हा मारुत[1] !

विकटमणिकवाटश्रीमदेतन्मदङ्गै-
र्मुहुरपि परिरम्भं साश्रु संहत्य[2] नीतम् ।
विरहयति न वक्षो मल्लिकाप्रेमदत्त-
स्तनसुरतरुदाम्नः सान्द्रमद्यापि गन्धम् ॥ 68 ॥

हा जननयनचन्द्र, हा गौरीप्रसादलब्ध, हा कुलतन्तो !

हा कलकण्ठजीवित ! हा मल्लिकाविलासप्रबन्ध-लालित !

(इत्यविशदवर्णं विलपन् मूर्च्छति)

(ततः प्रविशति बाष्पायमाणवदना नवमालिका रमयन्तिका कालिन्दी च)

सर्वाः -हा वल्लहसहीअणे मल्लिए, देहि णो वअणम् ।
सुन्दरि, विहडन्तचम्पअदलसुरहिरमणिज्जा

---

1. om हा मारुत, मु$_1$ 2. नो कणेहत्य, म$_1$, मु$_2$, त$_2$, के$_1$, अ$_1$

विलआणं वि दिण्ण वंमह विआरा तारिसी तुह तणुयट्टी[1] कीरिसस्स देव्वदुव्विवाअस्स भाअणं आसि। हा महाभाअ मारुअ। कहं णु सहेसि तुमं वि मल्लिआए विओअम् । जाए किदे कण्ठच्छेदसाहसे सण्णाहो किदो ।

[हा वल्लभसखीजने मल्लिके ! देहि नो वचनम् । सुन्दरि, विघटमानचम्पकदलसुरभिरमणीया वनितानामपि दत्तमन्मथविकारा तादृशी तव तनुयष्टिः कीदृशस्य दैवदुर्विपाकस्य भाजनमासीत् । हा महाभाग मारुत ! कथन्नु सहसे त्वमपि मल्लिकाया वियोगम् ? यस्याः कृते कण्ठच्छेदसाहसे सन्नाहः कृतः ।]

नवमालिका – हा असोढणोमालिआखणविरहे, कीस मं उवेक्खसि! चिट्ठउ उण णोमालिआ तुह जीविअ-णिबन्धणस्स विविहविमुक्कं[2]करुणक्कन्दस्स मारुअस्स वा दंसणं देहि ।

[हा असोढनवमालिकाक्षणविरहे, कस्मात् मां उपेक्षसे ? तिष्ठतु पुनः नवमालिका ! तव जीवितनिबन्धनस्य विविधविमुक्तकरुणा-क्रन्दस्य मारुतस्य वा दर्शनं देहि ।]

(संस्कृतमाश्रित्य)

1. ० लच्छी [लक्ष्मी], मु<sub>1</sub> 2. सविहमुक्क, मु<sub>1</sub>

दहति तदिदमद्य स्मर्यमाणं मनो मे
सकलकलमृगाङ्कच्छायमच्छस्मिताद्रिम् ।
स्मरमुकुरकपोलश्वेतिमोन्नीतराग-
व्यतिकरसुभगं ते कोमलापाङ्गवक्त्रम् ॥ 69॥

(आकाशे)

सहि मा मण्णेहि णोमालिआ तुमं विहाय भूलोए खणं वि वट्टिस्सदित्ति । अज्ज एव्व खणे पेच्छ तुह पस्सपरिवट्टिणिम् । कहं णु अच्छराणं[1] मज्झे परिअणरहिआ चिट्टिस्ससि ?

[सखि, मा मन्यस्व । नवमालिका त्वां विहाय भूलोके क्षणमपि वर्तिष्यत इति । अद्यैव क्षणे पश्य तव पार्श्वपरिवर्तिनीम् । कथन्नु अप्सरसां मध्ये परिजनरहिता स्थास्यसे ?]

**कालिन्दी**–हा सहि, एक्कंपदं चिअ सुमरिदव्वा जादासि । हा भअवइ मण्णे तुमं वि मल्लिअं एव्व अणुगदवदित्ति । हा महाभाअ मारुअ ! कलअण्ठमेत्तसहाओ तुमं वि कहिं गदोसि ?

[हा सखि, एकपदे एव स्मर्तव्या जातासि । हा भगवति, मन्ये त्वमपि मल्लिकामेवानुगतवतीति । हा महाभाग मारुत ! कलकण्ठमात्रसहायस्त्वमपि कुत्र गतोऽसि ?]

---

1. जलहराणं, $मु_1$, $म_1$, $त_2$, $मे_1$, $मै_2$, $मै_4$, $के_2$ [जलधराणां]

**रमयन्तिका** – हा मन्दभाइणि रमअंतिए तुह सङ्गमो एव्व सव्वस्स अस्स अणत्थस्स मूलं आसि । सुणीअदि खु जं जस्स पुढमभाविदं तं तस्स कारणंति ।

[हा मन्दभागिनि रमयन्तिके, तव सङ्गम एव सर्वस्यानर्थस्य मूलमासीत् । श्रूयते खलु यत् यस्य प्रथमभावि तत् तस्य कारणमिति ।]

**कालिन्दी**–सहिओ ! महाभाअं वा इह काणणे अण्णेसामो ।

[सख्यः ! महाभागं वा इह कानने अन्विष्यामः ।]

**सर्वाः** – हा महाभाआ, तुमं वा दंसणं देहि ।

[हा महाभाग, त्वं वा दर्शनं देहि ।]

(उपसर्पन्ति । मारुतकलकण्ठौ दृष्ट्वा, ससंभ्रमाक्रन्दं)

एदे दम्भोलिखुडिआ विअ कप्परुक्खा सेरदे महाभाआ ।

[एतौ दम्भोलिखण्डिताविव कल्पवृक्षौ शयाते महाभागौ ।]

(उरोजयोराहत्य पतन्ति)

**नवमालिकाकालिन्द्यौ** – (मारुतकलकण्ठौ दृष्ट्वा)
सहि, सहि रमअंतिए, मुच्छिदा एव्व एदे ता जलहरवारिकणतारइदेण इमिणा लदापल्लव-पिच्छेण वीजेहि ।

[सखि, सखि रमयन्तिके, मूर्च्छितावेवैतौ । तस्माज्जलधरवारिकणतारकितेनानेन लतापल्लव-पिञ्छेन वीजय ।]

(रमयन्तिका सबाष्पं तथा करोति)

**कलकण्ठः** – (प्रबुध्य, सविषादं)

हा धिक्, वयस्यमनासाद्य प्रतिनिवृत्तोऽस्मि ।

(विलोक्य, स्वगतं)

हन्त, एता अप्यागताः ।

(प्रकाशं)

हा सखि, नवमालिके, हा सखि, कालिन्दि, पश्यत मारुतस्यावस्थाम् ।

एष हि –

अन्वेषमाणो विपिने पृच्छन् खगमृगद्रुमान् ।
अलब्ध्वा मल्लिकां कान्तां शान्तः शेते सुहृन्मम ॥70॥

(रमयन्तिका विलोक्य)

एषा तु मुग्धा लज्जाशोकपरवशा निः शब्दं रोदिति ।

(सनिर्वेदं)

इयं हि दुर्दान्तकृतान्तलीढं
रमोपमाना रमयन्तिका माम् ।
लतेव दावानलदह्यमान-
मुपघ्नमाश्रित्य विशोषमेति[1] ॥ 71॥

---

1. विशेष°, मु₁, म₁

(मारुतं विलोक्य)

हन्त, निर्विकारमेव वयस्यस्य वदनम् ।

(सत्वरमुत्थाय)

वयस्य, अयमहमागच्छामि ।

(परिक्रम्य, अधो विलोक्य)

अयमनयनग्राह्यतलो[1] गिरिनितम्बप्रपातः ।

अस्मिन् गजवर्ष्मधरैर्गण्डोपलमण्डलैस्स्थपुटे ।
सख्युर्गतिमनुगच्छन् निर्झरपातं पतामि भृगुदेशे ॥72॥

**सर्वाः**–(ससंभ्रममुसृत्य कलकण्ठं पृष्ठतः कृत्वा)
अह्ने पुडमं पडिस्सामो ।

[वयं प्रथमं पतिष्यामः]

**नवमालिका** – सहि मल्लिए ! महाभाअ मारुअ ! जणणंतरे वि तुह्माणं परिआरिआ भविस्सामि ।

[सखि मल्लिके ! महाभाग मारुत ! जननान्तरेऽपि युवयोः परिचारिका भविष्यामि ।]

(इति पतितुमिच्छति)

**कलकण्ठः** – (सर्वतो विलोक्य, ससंभ्रमाक्रन्दं)
नवमालिके,

मा मा पत सर्वतः प्रागनुभूतचरः संक्षोभ इव ।
प्रकाशं रुन्धानं घनपिहितशेषं दिनपतेः।

---

1. ° ग्रह्यो, के,

(इति पादं व्यत्यस्य प्रतिघ्नच्चक्षूंषीत्यादि[1] प्रागुक्तमेव पठति )

(ततः प्रविशति नवमालिकाकरावलम्बिनी शिखामणिना भूषिता मल्लिका)

**मल्लिका** –सहि मा मा पडेहि । सखि मा मा पत

(इति नवमालिकां निवारयति)

**सर्वाः** – (सहर्षविस्मयं मल्लिकां प्रत्यङ्गं परिरभ्य, सगद्गदं)

[2]सहि, अवि सच्चं पच्चाअदासि ?

[सखि, अपि सत्यं प्रत्यागताऽसि ?]

**कलकण्ठः** – (सहर्षं)

दिष्ट्या अनुकम्पितास्मो दैवेन । तदिदं प्रमुग्धस्य संज्ञालाभः, अन्धकारपतितस्यार्कदर्शनं, अङ्गारकवलितस्यामृतासारः ।

**मल्लिका** – (सबाष्पं)

सहिओ, कहिं अज्जउत्तो ?

---

1. तथा च पाठो यथा,

प्रकाशं रुन्धानं घनपिहितशेषं दिनपतेः
प्रतिघ्नश्चक्षूंषि प्रकटितभयाश्चर्यमभितः ।
तमो वा तेजो वा तदुभयपरिप्रक्तिरथवा
किमप्येतत्तत्वं विरयति जगद्दीपयति च ॥

-- Mallika°, VIII. 47

2. $मु_1$ **omits from** सहि **to** पडिबुज्झिस्सदि

[सख्यः, कुत्र आर्यपुत्रः]

**इतराः** –सहि, एसो तुह तारिसेण अ लद्धब्भमेण[1] अविण्णादतत्तेण अदंसणेण[2] तक्खणसंजाअ-मोहुम्मादपरवसो इदो तदो काणणेसु परि-हिण्डिअ एत्थ एव्व लआमूले मुच्छिओ ण उण पडिबुज्झइ ।

[सखि, एष तव तादृशेन च लब्धभ्रमेण अविज्ञात-तत्त्वेन अदर्शनेन तत्क्षणसञ्जातमोहोन्माद-परवशो इतस्ततः काननेषु परिहिण्ड्य एतदेव लतामूले मूर्च्छितो न पुनः प्रतिबुध्यते ।]

**मल्लिका** – (सबाष्पं) हा अज्जउत्त ! हा आर्यपुत्र !

(इति सह सर्वैरुपसर्पति । इतरा दर्शयन्ति ।

**मल्लिका** – (तथाभूतं मारुतं दृष्ट्वा)
हा हदम्मि मन्दभाअ ! हा णाह, पेच्छ मं पेच्छ, आगअम् ।

[हा हताऽस्मि मन्दभागा । हा नाथ, प्रेक्ष मां प्रेक्ष, आगताम् ।]

(इति छिन्नपातं पतति)

**इतराः** – (अप्राप्तभूतलामेव करतलैर्युगपद्धृत्वा)

---

1. अब्भुअतमेण, [अद्भुततमेन], मु$_2$, के$_3$, के$_4$, अ$_2$
2. add अ [च], मु$_2$, के$_1$

सहि, मा मा भआहि । मुच्छिओ एव्व एसो । ता अमुअसीएण तुह फस्सेण झत्ति पडिवोहेहि ।

[ सखि, मा मा बिभेहि । मूर्च्छित एवैषः । तस्मादमृंतशीतलेन तव स्पर्शेन झटिति प्रतिबोधय ।]

**मल्लिका** – (सगद्गदं)

सहीओ, तुरिअं मुच्छाहरं मणिं मह सिहाबन्धादो उम्मोइअ अज्जउत्तस्स अङ्के णिक्खिवेह ।

[सख्यः, त्वरितं मूच्र्छाहरं मणिं मम शिखा-बन्धादुन्मोच्य आर्यपुत्रस्य अङ्के निक्षिपत ।]

**इतराः** – (जनान्तिकं)

मा दाव मणिं णिक्खिवामो । पिअसहीए फस्सेण पडिबुज्झउ महाभाओ ।

(प्रकाशं)

सहि एव्वं विहेण मणिसहस्सेण वि ण सम्मइ एदस्स मुच्छा । तुमं उण रत्तुप्पलकोमलेण करअलेण जइ परामरिस्ससि अङ्गमङ्गं तक्खणं एव्व पडिबुज्झिस्सदि ।

[(जनान्तिकं) मा तावन्मणिं निक्षिपामः । प्रियसख्याः स्पर्शेन प्रतिबुध्यतु महाभागः । (प्रकाशं) सखि एवंविधेन मणिसहस्रेणापि न शाम्यत्यस्य मूच्र्छा । त्वं पुनः रक्तोत्पलकोमलेन

करतलेन यदि परामृशस्यङ्गेऽङ्गे, तत्क्षणमेव प्रतिभोत्स्यते ।]

**कलकण्ठः** – (सखीनां वचनमनुमोदमानः)

सखि धारय पत्युरङ्गमङ्गैः-
कठिनं माऽस्य मणिं निधेहि गात्रे ।
त्वददर्शनशोकमूढबुद्धे-
र्ननु मूर्च्छाहरमौषधं त्वमेव ॥ 73 ॥

(मल्लिका सबाष्पं सपुलकं च उत्सङ्गेन धारयति । इतराः सशीकरैः पल्लवैर्वीजयन्ति ।)

**मल्लिका** – (मारुतं विलोक्य)

हत्थि अज्ज वि ण पडिबुज्झइ अज्जउत्तो
(कलकण्ठं प्रति)
माहाभाअ, तुह वअणेण पडिबोहेहि वअस्सम् । णाहि तुए आहूदो सिविअणे वि तुह्णिको होइएसो ।

[(मारुतं विलोक्य) हन्त, अद्यापि न प्रतिबुध्यते आर्यपुत्रः । (कलकण्टं प्रति) महाभाग, तव वचनेन प्रतिबोधय वयस्यम् । नहि त्वयाऽऽहूतः स्वप्नेऽपि तूष्णीको भवत्येषः ।]

**कलकण्ठः** – अयि, मारुत !

निशमय गिरमस्याश्चक्षुषी स्निग्धतारे
तरलय धृतबाष्पां प्रेयसीं पश्य दीनाम् ।
ननु कथयसि शश्वद्दर्शने मल्लिकाया
मम नयननिमेषो नाम कापि व्यथेति ॥ 74 ॥

**नवमालिका** – सहि दिट्ठं खु मुच्छिओ महाभाओ । मण्णे तुह परिरम्भेण पडिबुज्झइत्ति । ता खणं आलिङ्गेहि ।

[सखि, दृढं खलु मूर्च्छितो महाभागः । मन्ये तव परिरम्भेण प्रतिबुध्यतीति। तस्मात् क्षणमालिङ्ग ।]

**मल्लिका** – (सलज्जं, स्वगतं)

अज्जउत्त, कीस उण मं एदाणं पुरदो लज्जावेसि। सवामि तुह चरणेहिं एक्कन्दे देमि परिरम्भम् । ता उट्ठेहि ।

[आर्यपुत्र, कस्मात् पुनर्मां एतासां पुरतो लज्जापयसि ? शपामि तव चरणाभ्याम् । एकान्ते ददामि परिरम्भम् । तस्मादुत्तिष्ठ ।]

**सर्वाः** – सहि लद्धे पिअदमे पच्चाल्लज्जिआसि । अज्ज उण एक्कं परिरम्भं देहि ।

[सखि, लब्धे प्रियतमे पश्चाल्लज्जिष्यसे । अद्य पुनरेकं परिरम्भं देहि ।]

**मल्लिका** – (मल्लिका अवशमङ्गीकुर्वन्ती[1], स्वगतं)

अज्जउत्त, पूव्वेज्जू सारसिआमुहेण पत्थिदो अज्ज दिज्जइ एसो परिरम्भो ।

[आर्यपुत्र, पूर्वेद्युः सारसिकामुखेन प्रार्थितो अद्य दीयते, एष परिरम्भः ।]

---

1. ° करोति, मै$_{1}$, के$_{1-2}$

(इति सलज्जं सकम्पपुलकञ्चालिङ्गति)

**मारुतः** – (प्रबुध्य, स्वगतं)

[1]सोऽयं सर्वाङ्गीणः कर्पूरविलेपशीतलस्पर्शः ।
मन्ये स्वर्गमितोऽहं प्रियतमया चास्मि परिरब्धः ॥75॥

(नयने उन्मील्य मल्लिकां विलोक्यन् ,
आलिङ्गन्नेवोत्थाय, सहर्षगद्गदम् )

अयि प्रेयसि मल्लिके ! दिष्ट्या परलोकगतमपि त्वामासादितवानस्मि ।

किं नाकमेत्य चकितासि विदेशमेका
किन्तेऽभवन् सवयसः सुरराजवध्वः ।
किं नन्दनद्रुमतले रमते मतिर्वा
किं मे विलम्बकलया कुपितासि किञ्चित् ॥76॥

**कलकण्ठः** – अद्यापि सोन्मादशेषमेव हृदयम् ।

**मल्लिका** – (स्वगतं)

हत्थि मं सग्गट्ठिअं मण्णेइ अज्जउत्तो !
[हन्त मां स्वर्गस्थितां मन्यते आर्यपुत्रः !]

(हर्षशोकविवशा वक्षस्येव [2]विलीयते ।)

**मारुतः** – (सख्यौ विलोक्य, सहर्षं)
सखि नवमालिके, सखि कालिन्दि, किं युवामप्यागते स्थः ? अथवा जन्मनः प्रभृति अविरहितक्षणे युवां कथं मल्लिकां विहाय स्थास्यथः ?

---

1. को°, $त_1$, $अ_1$ 2. नि°, $मु_2$

(पुनः सहर्षं)

हन्त, रमयन्तिकासखः कलकण्ठोऽप्यत्रैव ।

सखि, रमयन्तिके ! स्वागतं ते ।

(सानन्दं)

अद्यास्मि पूर्णकामो यत्सङ्गच्छे सह बान्धवैः ।
नाकोऽपि नरकस्तस्य यस्य मित्रं न सन्निधौ ॥ 77 ॥

**कलकण्ठः** – सखे, ननु मणिकूटशिखरमेतत्, न पुनर्नाकः ।

**मारुतः** – (सहर्षातिशयं परितो विलोक्य)

सखे सत्यमेवमेव ।

तदिदमचलशृङ्गं पत्तनं नामराणां
अयमपि शुभतोयो निर्झरो नाभ्रगङ्गा ।
विपिनतरव एते न द्रुमा नन्दनोत्था
वयमपि मनुजा स्मो न श्रिता देवभूयम् ॥78॥

(मल्लिकामालिङ्गन्)

प्रिये, किमेतत् ?

**मल्लिका** – अज्जउत्त, अहं खु तस्सिं पल्लवतप्पे अतक्किआगअमोहा पुणो पडिबुद्धा पेच्छामि भअवदीए उच्चङ्गवट्टिणं सिहामणिणा भूसिअं विदेसट्ठिअं अत्ताणम् । कहिअं भअवदीए सो किल देसो दमिलेसु कञ्चीउरं णाम सिरिकामच्छीए ठाणं ति ।

[आर्यपुत्र, अहं खलु तस्मिन् पल्लवतल्पे अतर्कितागतमोहा पुनः प्रतिबुद्धा पश्यामि

भगवत्याः उत्सङ्गवर्तिनं शिखामणिना भूषितं विदेशस्थितमात्मानम् । कथितं भगवत्या स किल देशो द्रमिलेषु काञ्चीपुरं नाम श्रीकामाक्ष्याः स्थानमिति ।

(सर्वे विस्मयं नाटयन्ति)

**मारुतः** – क्वाद्य भगवती ।

**मल्लिका** – तदो कञ्चीउरादो भअवदिं आलम्बिअ झत्ति एव्व आअदह्मि, णोमालिआहत्थे समप्पिदा अ । ण पेच्छामि पुणो भअवदिम् ।

[ततः काञ्चीपुराद्भगवतीमालम्ब्य झटित्यत्रैवा-गताऽस्मि, नवमालिकाहस्ते समर्पिता च । न पश्यामि पुनर्भगवतीम् ।]

(प्रविश्य)

**मन्दाकिनी** – (सस्मितं)

वत्स, दिष्ट्या अविपन्नमनोरथोऽसि ।

(सर्वे सहर्षविस्मयमुत्थाय प्रणमन्ति)

**मारुतः** – भगवति, अवाङ्मनसगोचरप्रभावे ! श्रोतुमिच्छामि विस्तरतोऽमुं वृत्तान्तम् ।

**मन्दाकिनी** –वत्स! महती खल्वियं कथा । तदनव-सरोऽयम् । दूयन्ते खलु विश्वावसुप्रभृतयः

स्कन्धावारजनाश्च । तज्झटिति गत्वा आश्वासयामः ।

**कलकण्ठः** – युज्यत एतत् ।

**मारुतः** – यद्भवत्यै रोचते । कलकण्ठ! दर्शय पन्थानम् ।

**कलकण्ठः** –इतः इतः ।

(इति निष्क्रान्तास्सर्वे)

उद्दण्डं रङ्गनाथः सुतमलभत यं रङ्गदेवी तथाम्बा
त्रैविद्येशो महर्षिर्निरवधिमहिमा यद्धिते जागरूकः ।
तस्य श्रीविक्रमाज्ञाबहुमतिरचिते मल्लिकामारुतेऽस्मिन्
आसीदूर्ध्वोष्टमस्य प्रकरणतिलके निष्कलङ्कोऽयमङ्कः ॥

॥ इति नवमोऽङ्कः समाप्तः ॥

...



1. मु, omits the verse; reads इति नवमोऽङ्कः समाप्तः ।

## ॥ दशमोऽङ्कः ॥

[1](ततः प्रविशति वैतालिकः)

**वैतालिकः** – (सहर्षं परिक्रामन्, परितो विलोक्य) दिष्टचा भगवतीप्रभावप्रत्युज्जीवितमल्लिकासखे प्रतिनिवृत्ते कुमारमारुते पुनरपि उन्मृष्टरथ्यं, उच्चित्रतोरणं, उत्तम्भितकेतुजालं, उच्चलितगाणिक्यं, उद्धुम्फितमङ्गलमृदङ्गं, उद्दामवन्दिवृन्दं, उत्सवमयमखिलं स्कन्धावारपदम् ।

(सश्लाघं)

आगायन्नागकन्यापरिचितकटकाच्छैलतश्चन्दनाना-
माविद्याधर्युदारस्मितरुचिधवलादम्बिकासोतुरद्रेः ।
आपश्चात्प्राक्पयोधेरधिलहरिमुहुर्मज्जदुन्मज्जदर्का-
दानन्दो नेत्रभाजां जयति गुणगणैर्मारुतो मन्त्रिचन्द्रः ॥1॥

(परितो विलोक्य, पुनः सहर्षं)

एते खलु मारुतस्य भवनद्धाराङ्गणवितर्दिकापरिसरे विचित्राम्बरमाल्याङ्गरागभूषणोष्णीषधारिणो नानादिगन्तरागता वन्दिनो वर्णयन्ति मारुतसंबान्धिनो गुणगणान् । तदहमप्येषामन्यतमो भवामि ।

(परिक्रामति । नेपथ्ये)

---

1. मु$_1$ and म$_1$ omit the following portion till नेपालीनां add (नेपथ्ये) see next page.

जय जय जगन्मङ्गलमाणिक्यदीप, मारुत !

आन्ध्रस्त्रीणामराले रचयति चिकुरे[1] केतकीपत्रकृत्यं
कण्ठे मुक्ताकलापान् द्विगुणयति सितान् पाण्ड्यसीमन्तिनीनाम् ।
कर्णे कर्णाटिकानां प्रकटयतितमां दन्तताटङ्कलक्ष्मीं
कार्पूरीपत्रवल्ली भवति तव यशो गण्डयोः केरलीनाम् ॥2॥

(पुनर्नेपथ्ये)

मिथ्याव्योमगिरो निगूढघटनादुन्मादनाद्दन्तिनो
यस्ते शम्बरकः क्रियासमभिहाराद्बधवैरोऽभवत् ।
प्रत्यावृत्य फलद्भिरात्मकपटैराहन्यमानः स्वयं
व्रीडात् सोऽद्य पलायते स्वविषयाज्जाहस्यमानो जनैः ॥3॥

**वैतालिकः** – (आकर्ण्य, सोपहासं)

पलायते इति किमुच्यते ? स खलु कतिपयक्षणारोपितजामातृशब्दः तमालविटपावलम्बी कात्यायनीहेलनाद्बिभ्यता स्वपरिजनेनापि इयन्तं समयं नोन्मोचितः । अद्य पुनः प्रतिनिवृत्तायाः मन्दाकिन्याः वचसा त्रोटितबन्धनः तत्क्षण एव महाराजमप्यनापृच्छ्य अपलायिष्ट मगधेश्वरः ।

(पुनर्विहस्य)

विदितसकलदुर्नयप्रपञ्चो भ्रमरकः[2] चरणताडनं कलविङ्ककस्य साम्प्रतममंस्त ।

---

1.नेपालीनामराले विरचयति कचे, $मु_1$ 2. नागाङ्गना, $मु_2$, $म_1$

(विलोक्य, साशङ्कं)

कथमसौ करतलान्दोलितकनकवेत्रलतः कञ्चुकी किमपि वन्दिमार्गमादिशति ।

(कर्णं ददाति । नेपथ्ये)

भो भो वन्दिनः ! मन्दरक्षुभितमहोदधि-कलकलगम्भीरेण कोलाहलेन मा मा बधिरयत प्रपञ्चम् । शुश्रूषते मल्लिकासखो मारुतः कुमारो भगवत्याः मन्दाकिन्या मुखात् कामपि विचित्रां कथाम् । तद्विरमतु क्षणमुद्गर्जितम् ।

**वैतालिकः** – (आकर्ण्य, सकौतुकं)
कीदृशी सा कथेति कुतूहलेन स्फुटतीव मे हृदयम्। भवतु । स्वयमेव सर्वं प्रकटीभविष्यति । ननूच्यते अन्तः पुरगतमापणे घुष्यत इति । तद्यथेच्छं गच्छामि ।

(इति निष्क्रान्तः)

।। शुद्धविष्कम्भकः ।।

(ततः प्रविशति पटमण्डपोपविष्टः कलकण्ठसखो मारुतः, सखीजनपरिवृता[1] सह रमयन्तिकया मल्लिका, सशिष्या मन्दाकिनी विभवतश्च परिवारः ।)

**मारुतः**– भगवति, अवहिता स्मः । प्रस्तूयतां कथा ।

---

1. समीपतश्च, मु,

**मन्दाकिनी**–वत्स मारुत, श्रूयताम् ।

अस्ति सेतुबन्धसीमन्तितमहार्णववरिवस्यमान-
रघुनाथपराक्रमायामाशायां,

मन्दानिलप्रसवगेहगुहाविहारि-
नागाङ्गनामणिविभूषणकान्तिचित्रः ।
कुम्भोद्भवप्रणयिनीकरवर्द्ध्यमान-
पाटीरवल्लिवलयो मलयो गिरीन्द्रः ॥ 4 ॥

**कलकण्ठः** - (स्वगतं)

सावष्टम्भोऽयमारम्भः ।

**मारुतः** - भगवति, श्रूयते खल्वसौ ।

(सश्लाघं)

प्रतीयन्तां विश्वे परमगरिमाणक्षितिभृतो
महीयान् कोऽप्यन्यः खलु मलयशैलस्य महिमा ।
गुणस्निग्धास्तत्तत्कुलगिरियशोहारिणि कुचे
विशुद्धां यत्कीर्तिं दधति वनिताश्चन्दनमिषात् ॥5॥

**नवमालिका** - (जनान्तिकं)

सहि, मल्लिए ! मलआअलमिषेण विलआत्थणो वण्णिदो ।

[सखि, मल्लिके ! मलयाचलमिषेण वनितास्तनो वर्णितः ।]

(मल्लिका स्मयते)

**मन्दाकिनी** -

तस्मिन्कदाऽपि सहकारनवप्ररोह
मुह्यत्कुहूमुखमुखोद्गतमुग्धनादे ।
जाते वसन्तसमये साचिवः स्मरस्य
देवश्चचार किल दक्षिणगन्धवाहः ॥ 6 ॥

**मारुतः** - ततस्ततः ?

**मन्दाकिनी** - अहो स्वच्छन्दहृद्यानि महतां चरितानि ।

**यतः**

सोऽयं चरन् गिरितटीषु यदृच्छया स्वं
रूपं दधौ मरकतद्युति मातरिश्वा ।
यद्वीक्ष्य हर्षजलशीकरिभिर्बभूवे
नेत्रैर्विलासवलितैर्वनदेवतानाम् ॥ 7 ॥

**मारुतः** - (सकौतुकं) ततस्ततः ?

**मन्दाकिनी** -

अथ मणिधरनाम्नो मन्त्रिणो नागभर्तु-
र्मदनजयपताका मञ्जुला नाम कन्या ।
वदनकमलगन्धाकृष्टलोलम्बमाला
विपिनभुवि सखीभिस्तत्र चिक्रीड बाला ॥ 8 ॥

**मारुतः** - ततस्ततः ?

**मन्दाकिनी** - ततश्च,

सा श्रोणिमन्थरगतिरस्तनतान्तमध्या
[1]वासन्तिकासुमनसः सदयं हरन्ती ।
तापिञ्छपिच्छरुचिरं सविधे चरन्तं
देवं ददर्श मरुतं लतिकानिकुञ्जे ॥ 9 ॥

**मारुतः** – ततस्ततः

**मन्दाकिनी** – ततश्च,

सेयं कन्या किमपि विशिखैर्मान्मथैः पीड्यमाना
सीदद्गात्री दरमुकुलितापाङ्गमालोकयन्ती ।
प्रापद्गर्भं हृदयसमनुध्याततत्सङ्गसौख्या
प्रासोष्टाव[2] प्रचकितमतिः[3] पत्रजाले कुमारम् ॥10॥

**मारुतः** – एक एव हि समयो देवतागर्भाणां धारण-प्रसवयोः । ततस्ततः ?

**मन्दाकिनी** – ततश्च देवो गन्धवाहस्तामदूषित-कन्याभावामनुगृह्णन्, अन्यासामपि हृदयक्षोभ-माशङ्कमानः तत्रैव तिरोऽभूत् । साऽपि पुनर्वात्सल्य-क्षरितस्तनाऽपि पितुर्बिभ्यती लतापल्लवतलिमे निधाय तं बालं तत्पालनार्थं[4] च [5]वनदेतां याचमाना सबाष्पं स्वं धाम जगाम ।

**मल्लिका** – (सदयं)

---

1. ° की, $मु_2$, $त_2$, $त_1$, $के_1$
2. प्रासोष्टाऽपि, $मु_2$
3. प्रचलित °, $के_2$
4. ° पालनश्च, $मु_2$, $त_2$
5. ° देवताः, $मु_2$, $त_2$

को उण रक्खसो अरण्णंमि माउपिउपरिच्चत्तस्स कुमारस्स ?

[कः पुनः रक्षकोऽरण्ये [1]मातृपितृपरित्यक्तस्य कुमारस्य ?]

**मन्दाकिनी** - अथ पर्यन्तभाजो भगवतः कुम्भयोने-राश्रमात् समिदाहरणागतैर्मुनिदारकैरुद्धृतो नीतः समर्पितश्च महर्षेः करे।

**मारुतः** - (सहर्षं) ततस्ततः ?

**मन्दाकिनी** - ततश्च,

लोपामुद्रास्वतनयमतिप्रस्नुतस्तन्यपायी
काले काले कलशजनुषा क्लृप्तसंस्कारवर्गः।
हस्ताद्धस्तं मुनिजनवधूमण्डलैर्नीयमान-
स्तत्र स्थाने स किल ववृधे चक्षुषां बालचन्द्रः ॥11॥

**मारुतः** - अहो पुण्यवानयं बालः। यतो भगवतो दुर्लङ्घ्यशासनस्तम्भितविकटविन्ध्याचलविजृम्भणस्य कुम्भयोनेः पादोपकण्ठमगमत्।

(सश्लाघं)

वचसां दूरे खलु स भगवान् मुनिचक्रवर्ती।

---

1. माता °, $मु_2$, $अ_2$ 2. क्षिप्त °, $त_2$

प्राक् पाणिपल्लवपुटीचुलुकीकृतेन[1]
सत्यं समुद्रसलिलेन समं निपीतः ।
दृष्ट्वा ततोऽपि विपुलं हृदयं तदीय-
मध्यास्त सुस्थिरमनन्यरुचिर्मुकुन्दः ॥ 12 ॥

**मल्लिका** - (सकौतुकं)

भअवदि, तस्स बालस्स कीलिआइ सुणिदुं अहिलासो मे ।

[भगवति, तस्य बालस्य क्रीडितानि श्रोतुमभिलाषो मे ।]

**मन्दाकिनी** - स खलु वर्धमानः,

क्रमलोलमुग्धकरपल्लवः क्षिता-
वलिकान्तचञ्चदलिकान्तकुन्तलः ।
मृदुजानुसञ्चलनमञ्जुसंक्कण[2]-
न्मणिकिङ्किणीगणमरिङ्गदङ्गणे ॥ 13 ॥

ततश्च क्रमात् ,

मुहुरिभकलभानां कर्णमामोटयन्तं
मृगपतिपृथुकानां पाटयन्तं सटान्तम् ।
अविनय ! बत[3] मा मा सत्वहिंसां कुरूच्चै[4]-
रिति मुनिजन एनं स्नेहगर्भं न्यरौत्सीत्[5] ॥ 14 ॥

**मारुतः** - (सोत्कण्ठं, स्वगतं)

---

1. चुलकी °, $मु_1$ 2. मञ्जदरक्कण °, $मु_1$ 3. °रत, $मु_2$, $त_2$
4. चिक्लिशो मार्गमुच्चैः, $मु_2$, $त_2$ 5. व्यरौत्सीत्, $मु_1$

कथमेतत् , कथाश्रवणात् किमपि उन्मनायित-
मिव बिभर्मि ।

(प्रकाशं) ततस्ततः ?

**मन्दाकिनी** – ततश्च कालेन,

शृङ्गारसागरविजृम्भणचन्द्रिकोत्थ-
मुन्मादनौषधमनङ्गमतङ्गजस्य ।
रागप्रवालपरिपोषवसन्तमासं
लेभे वयः स सुनृतं[1] वनितेक्षणानाम् ॥ 15 ॥

**नवमालिका** - (जनान्तिकं)

कालिन्दि, पेच्छ पेच्छ । भट्टिदारिआए अस्सिं
कहासवणम्मि सविसेसो आअरो ।

[कालिन्दि, पश्य पश्य । भर्तृदारिकायाः अस्मिन्
कथाश्रवणे सविशेष आदरः ।]

**मारुतः** – ततस्ततः ?

**मन्दाकिनी** - (साश्चर्यं)

अतिदुर्घटस्यापि घटने पाटवी खलु भगवान्
परमेष्ठी । स हि कदाचिद्दुटजाङ्गण प्ररूढानां
बालचन्दनलतानां पल्लवैः सवयोजनेन कल्पिते
घर्मोचिततल्पे शयानः ।[1]

अङ्गैः कोमलजातरूपकदलीगर्भप्रियंभावुकै-
रम्लानैरपि विभ्रमैरनुचरान्विष्वक् सृजन्तीं स्मरान् ।

---

1. सुकृतं, $मु_2$, $त_2$

लज्जालोलकनीनिकालुलितया संभावयन्तीं दृशा
स्वप्ने कामपि कामनीयकनिधिं कन्यां समालोकत ॥16॥

**मारुतः** – (सोत्कण्ठं) ततस्ततः ?

**मन्दाकिनी** – ततश्च,

तां मन्दमन्दहसितेन मुखाम्बुजेन
बालां समीपमभियातवतीं सलीलम् ।
चेलाञ्चले करतलेन समाललम्बे
यावत्स तावदवधूय गतैव निद्रा ॥ 17 ॥

**मल्लिका** – (सानुतापं, स्वगतं)
कामिअणप्पद्देसिणी खु णिद्दासिविणअलद्धे वल्लहजणसमाअमे असहणा विअ [1]तक्खणेच्चिअ गच्छइ ।

(प्रकाशं)

भअदि, पडिबुद्धेण किं पडिवण्णम् ?

[(सानुतापं, स्वगतं) कामिजनप्रद्वेषिणी खलु निद्रा स्वप्नलब्धे वल्लभजनसमागमे असहमानेव तत्क्षण एव गच्छति । (प्रकाशं)भगवति, प्रतिबुद्धेन किं प्रतिपन्नम् ।]

**मन्दाकिनी** –

अथ विगलितधैर्यो हा प्रिये दर्शनं मे
पुनरपि वितरेति प्रस्तुतार्तप्रलापः ।

---

1. तक्खणं, मु$_2$

अहमहमिकयाङ्गे पातुकामामजस्रं
मनसिजविशिखानामेकमासीच्छरव्यम् ॥ 18 ॥

(सर्वे खेदं नाटयन्ति)

**मारुतः** – ततस्ततः ?

**मन्दाकिनी** – ततश्च, सहपांसुक्रीडनादारभ्य हृदय-निर्विशेषाभ्यां जनयित्रा पवनेन समर्पिताभ्यां आत्मानुरूपरूपशीलविद्याशौर्य[1]धैर्याभ्यां सवयोभ्यां उपह्वरे पृष्टो न्यवेदयत्तस्या लक्षणानि ।

**मारुतः** – कथमिव ?

**मन्दाकिनी** –

नवकुङ्कुमपङ्कवर्णं नयने नीलसरोजपत्रदीर्घे ।
वदनं पुनरिन्दुरेव तस्माद्गलिता रोमलता कलङ्करेखा ॥19॥

अपि च,

चूडापदे स्फुरति कोऽपि मणिर्यदंशुः
सौदामिनी भवति कौशिकनीरदस्य
हारावली च कुचयोरिभकुम्भभासो-
[2]र्लावण्यसिन्धुचलफेनततिद्युतिर्या ॥ 20 ॥

**कलकण्ठः** – (जनान्तिकं)
सखे[3], स्वप्नकान्तां कामयमानस्य तस्य सख्योरावेगमालोच्य सम्प्रति ममापि विषीदति हृदयम् ।

---

1. सौन्दर्य °, अ$_1$ 2. जल °, अ$_1$ 3. om सखे, मु$_1$

**मन्दाकिनी** -

नो वाप्यः कलहंसपक्षलुलिता न स्मेरसूना लता
नो गुञ्जद्भ्रमराः सरोजपवना नोद्दामचन्द्रा निशाः ।
नो तल्पानि मृणालभङ्गकलितान्यासन्ननङ्गज्वर-
क्रूरातङ्कधरस्य तस्य रतये तां सुभ्रुवं ध्यायतः ॥21॥

**मल्लिका** - (सविषादं)

अम्महे, अविण्णादसब्भावं सिविणयकण्णअं अहिलसन्तस्स तस्स[1] किंणु सरणम् ?

[अहो, अविज्ञातसद्भावां स्वप्नकन्यकां अभिलषतः तस्य किन्नु शरणम् ? ]

**मन्दाकिनी** - अथायमपरपक्षचन्द्र इव दिने दिने परिक्षीयमाणशरीरः कदाचिद्यामममात्रावशिष्टे दिवसे गिरिनदीतटीभाजश्चन्दनतरोः प्रच्छाय-शीतले तले किसलयतलिमोपविष्टः [2]कोमलकदली-दलव्यजनपाणिभ्यां[3] चिन्ताशोकव्याकुलाभ्यां सवयोभ्यामुपास्यमानः करतलनिहितपरि-पाण्डुदीनवदनो निश्वसन् बाष्पमन्थरया दृशा गगनदर्शं[4] यदृच्छयाऽलोकत ।

तत्र च,

मुक्तावदातनयनान् पाटलचञ्चून् गृहीतबिसवलयान् ।
शशधरवलक्षगरुतो ददर्श गगनाध्वजाङ्घिकान् हंसान् ॥22॥

---

1. om तस्स, मु₁ 2. om दल, मु₁
3. समा °, मु₁ 4. तलं, त₂

**मारुतः**- (सकौतुकं)

ततस्ततः ?

**मन्दाकिनी** -

तत्रैककेन [1]बिसकाण्डधिया खगेन
चञ्च्वा विदश्य कथमप्यपनीयमानः ।
वेगाच्च्युतोऽस्य तलिमे निपपात कोऽपि
हारः शरद्विशदचन्द्रमरीचिगौरः ॥ 23 ॥

**कलकण्ठः** - (विहस्य)

उपकृतं दैवेन हंसस्य यो मृणालधिया केवल-
चञ्चूखेदाय तं बभार ।

**मारुतः** - (सस्मितं) ततस्ततः?

**मन्दाकिनी** - ततश्च पतन्तमेव तं विस्मय-हर्षोत्फुल्ल-
नयनः करतलेन गृहीत्वा सखायावाचख्यौ ।

पुलकयति वपुर्मे स्पृष्टमात्रोऽपि हारो
ध्रुवमयमलसाक्ष्यां[2] स्वप्नदृष्टो मया प्राक् ।
हरिमणिरयमग्रे प्रत्यभिज्ञायते य-
स्स्तनयुगमसितेन प्रावृणोदंशुकेन ॥ 24 ॥

**कलकण्ठः** - (सवितर्कं)

एतेन सा क्वचिदस्तीति कल्पनीयं तैः ।

---

1. भङ्ग °, $त_2$, $अ_1$ 2. अलसाक्ष्याः, $मु_2$

**मल्लिका** – (आत्मनः स्तनाग्रे हारं विलोक्य, स्वगतं)
अस्स वि अज्जउत्तेण दिण्णस्स हारस्स मज्झे हरिमणी अत्थि ।
[अस्याप्यार्यपुत्रेण दत्तस्य हारस्य मध्ये हरिमणिरस्ति ।]

**मन्दाकिनी**– अथ तां हारलतां अधिकन्धरमारोप्य प्रियतमापरिरम्भमिव अनुभवंस्तदन्वेषणाय विधृतोत्साहः सञ्जातप्रत्याशाभ्यां सह सखिभ्यां व्रीडादनापृच्छयैव भगवन्तं कुम्भयोनिं अम्बरपथेन कौवेरीं दिशं प्रस्थितः ।

**मारुतः**–युज्यते यतो हंसानामागमः सैव दिगुपगम्या ।

**मन्दाकिनी** – प्रतिष्ठमानश्च,

सोऽयं रराज रजनीकरसुन्दरश्री-
रालोलहारकिरणच्छुरिताभ्रगर्भः ।
आश्चर्यनिश्चलकनीनिकलोचनाभि-
रालोकितो मुहुरमर्त्यनितम्बिनीभिः ॥ 25 ॥

**मारुतः** – ततस्ततः

**मन्दाकिनी** – ततश्च,

मज्जन्नभश्चरवधूस्तनशातकुम्भ-
कुम्भस्थलस्खलनजर्जरितोर्मिमालाम् ।
सप्तर्षिमण्डलनिषेवितकूलदेशं
पश्यन् जगाम स पुरन्दरलोकसिन्धुम् ॥ 26 ॥

**मारुतः** - ततस्ततः ?

**मन्दाकिनी** - [1]ततश्च, कल्पतरूणां निकटे,

सकलसुमनः सौरभ्याणां प्रपञ्चयितुः सुतं
मलयमरुतो दृष्ट्वा प्राप्तं मनोभवमोहनम् ।
मुदितमतिरम्लानां[2] मालां बबन्ध मधुच्युतं
विनयनमिते मुग्धे कण्ठेऽस्य वनदेवता ॥ 27 ॥

(मारुतः स्ववक्षसि मल्लिकादत्तां मालां वीक्षते)

**मन्दाकिनी** - ततश्च-.

तत्सौरभानुचलितैः पटलैरलीनां
विष्वक्प्रवर्तितकलिन्दसुताप्रवाहः ।
गन्धर्वगीतरवमूढकुरङ्गयूथं
गौरीगुरुं गगनचुम्बितटं प्रपेदे ॥ 28 ॥

**मारुतः** - ततस्ततः

**मन्दाकिनी** - ततश्च,

तन्नितम्बस्खलिताया गगनसिन्धोरुपकूलं उन्मद-विद्याधरीवदनाम्बुजगण्डूषशीधुसेकविकस्वरकेसरं, कोमलकङ्केलिताडनसन्नद्धकिन्नरकामिनीपाटल-चरणाम्बुजजल्पाकमणितुलाकोटिमधुरनिक्वाण-झलज्झलशीफरं, गर्वितगन्धर्वललनातुङ्गकुच-कलशालिङ्गनपुलकितकुरवकं, उद्भ्रान्तभृङ्ग-पटलघटितकपटाम्बुददर्शनताण्डवितशिखण्डि-

---

1. तत्र च, $मु_1$
2. $त_2$ **omits from** माला **to** अलीनां, **sl. 28.**

षण्डमण्डितकनककदलीमण्डलमण्डपं अर्द्ध-
योजनविस्तृतमाराममवगाह्य,

उन्नद्धतुङ्गकनकध्वजदण्डशृङ्ग-
चीनांशुकोल्लिखितकेसरिपुङ्गवाङ्कम् ।
कैलासकूटधवलोन्नतमालुलोके
कात्यायनीभवनसौधमुदात्तकीर्तिः ॥ 29 ॥

**मारुतः** – (स्वगतं) दृष्टचर इवायं प्रदेशः ।

(प्रकाशं) ततस्ततः ?

**मन्दाकिनी** – ततश्च, तत्र प्रविश्य, प्रणम्य चरण-
मम्बिकायाः पुरोमण्डपैकदेशे स्फाटिकीं
वितर्दिमध्यासीनां कामपि,

बुद्ध्याविघ्नोपसर्गानपहतनियमस्थैर्यया मध्यनाडी-
पर्वश्रेणीनिगूढां हृदयसरसिजे व्यक्तमुद्बुध्यमाने ।
स्वात्मानं वीक्षमाणां स्फुटपुलकतनुं शान्तगम्भीरवेषा-
मद्राक्षीद्धिरस्मिताक्षो विनयनतशिरा वर्णिनीं सिद्धयोगाम् ॥ 30 ॥

**मारुतः** – ततस्ततः ?

**मन्दाकिनी** –ततश्च, तया सह अर्धमुत्थाय, व्याहत-
स्वागतया चिरपरिचितयेव संभाव्यमानः क्षणमुपविष्टो
नातिदूरभाजिलतामण्डपे दत्तश्रुतिरश्रौषीत् लयच्छिन्नानि
द्रुतमध्यविलम्बितानि[1] ।

---

1. कङ्कणक्वणितानि, $मु_2$, $त_2$, $के_1$

**रमयन्तिका** – (जनान्तिकं)

सहि मल्लिए, [1]कण्णरसाअणं खु एसा कहा !

[सखि मल्लिके, कर्णरसायनं खल्वेषा कथा !]

**मल्लिका** – सहि, मह उण अस्सिं कहासवणे किंवि उस्सुअं विअ हिअअम् ।

[सखि, मम पुनरस्मिन् कथाश्रवणे किमपि किमपि उत्सुकमिव हृदयम् ।]

**मन्दाकिनी** – अथ तया वर्णिन्या सादरं, "महा भाग, दिष्ट्या भूषयसि अमुं प्रदेशम् । वर्ण्यसे खलु मलयगिरिकटकप्रत्यागतैः सोत्कण्ठं गन्धर्व-यौवतैः । अस्ति चात्र विमलयशोराशिवितानित-प्रपञ्चस्य विद्याधरामात्यचक्रवर्तिनो विश्वावसो-र्विलासलावण्यमयी कन्या । किं बहुना । यस्या हंसोपहृतममुं हारमुरसा संभावयति महाभागः सैवेयं कन्यका पर्यन्तभाजिलताभवने देवीं भवानीं कन्दुकक्रीडितेन आराधयति । श्रूयते खलु भूषणध्वनिः । तद्गच्छामो वयमपी"ति, व्याहृते हर्षविस्मयस्तिमितमतिस्तयैव दर्शित-मार्गः सह सखिभ्यां तमेव प्रदेशमगमत् ।

**मारुतः** – (सहर्षं)

दिष्ट्या गगनलतां कामयमानस्य सत्यैव सा जाता । ततस्ततः ?

---

1. किं णु, मु,

**मन्दाकिनी** – ततश्च,

भृङ्गारचामरकलापदुकूलवीटी-
क्रीडाशुकव्यजनरत्नकलाचिहस्ताः ।
आत्मावलोकनकुतूहलयापिताक्षीः[1]
गच्छन् ददर्श परितः परिवारकान्ताः ॥ 31॥

ततश्च,

अत्रालोकय लोचनोत्सवमिति ब्रूते स्म सा वर्णिनी
यावत्तावदसौ विभूषणझणत्कारानुयातेक्षणः ।
तामालोकत लोभनीयसुषमापीयूषधारोत्करै-
र्वल्लीसद्मनि वार्मुचीव कनकस्निग्धां तटिद्वल्लरीम् ॥ 32॥

**मारुतः** – (सोत्कण्ठं) ततस्ततः ?

**मन्दाकिनी** – ततश्च सा त्रिभुवनविजयसमये विरिञ्चि-दत्तासर्गाभ्यासपाटवशंसिनी हस्तोपायनपुत्रिकेव देवस्य मकरकेतनस्य विविधविरचितशारी-विशेषम् , आरब्धविभ्रमभ्रमीवेगशिथिलबन्ध-धम्मिल्लापतिमाल्यकुलम् आलोललोचनोत्पल-विषयीकृतपतितोत्पतितकन्दुकताडनाकुल-करकमलपल्लवितपुरोभागम् अवनमनोन्नमन-वेपितस्तनकुम्भत्रुटितकञ्चुलीकम् अनुक्षण-शङ्कितभङ्गमुग्धमध्यतलम्, अङ्कुरितघर्मकण-संहतिभङ्गीकोमलधवलदुकूलं निविरीस-नितम्बवाचालकाञ्चीकलापं, अरुणाङ्घ्रि-

1. धाविताक्षीः, मु$_2$

पल्लवनिष्ट्यूतयावकलवाङ्कितमणिकुट्टिम्, अखिल-सखीमण्डलविहितविविधवाटं जनितव्रीडमक्रीडत् ।

**मारुतः** – ततस्ततः ?

**मन्दाकिनी** – ततश्च स तूर्णमुपसृत्य विस्मृत-निमेषाभ्यां लोचनाभ्यां आपिबन्निव तां उपह्वरे सवयोभ्यां पृष्टोऽकथयत् ।

तद्वदनं ते नयने सा भ्रूः सा कन्धरा स बिम्बोष्ठः ।
तौ वणोरुहकुम्भौ सा श्रोणी ते पदे च सैवेयम् ॥33॥

अथ तदवस्थादर्शनद्धिगुणितमन्मथः पुनरप्युपह्वरे ताविदमवादीत् ।

झलंझलितकङ्कणं चलिततुङ्गपीनस्तनं
चलत्कुटिलकुन्तलं चपलनीलनेत्रोत्पलम् ।
श्रमाम्बुलुलिताननं श्रवणपातितोत्तंसकं
निहन्ति मम मानसं नहि नहि ध्रुवं कन्दुकम् ॥ 34 ॥

**मारुतः** – (जनान्तिकं)

सखे, कलकण्ठ ! मल्लिकाऽपि द्वीपान्तरजुषा चित्रकारेण हिमगिरिलतागृहे कन्दुकक्रीडाखिन्ना लिखिता ।

(प्रकाशं) ततस्ततः ?

**मन्दाकिनी** – ततश्च सा,

मूर्तं वसन्तमिव साङ्गमिवाङ्गयोर्नि
तं वीक्ष्य विस्मयविलासतरङ्गिताक्षी ।

---

1. ० व, के$_2$

तत्तद्भ्रमीवलनदत्तकटाक्षमाला
क्रीडा[1]विशेषमभिपूर्य शनैर्व्यरंसीत् ॥ 35 ॥

**मारुतः** - ततस्ततः ?

**मन्दाकिनी** - ततश्च सा,

कन्दुकगर्भेणैवाञ्जलिना प्रणम्य तां वर्णिनीम्,
क्रीडावेगविलम्बिनः श्रमकणाकीर्णत्कपोलस्थला
मुग्धेनाङ्गुलिपल्लवेन शनकैरुत्सारयन्ती कचान् ।
पश्यन्ती तमरालतारकरुचिस्निग्धैर्दृशोरञ्चलै-
र्बाला बालसमीरकम्पितलतालीलामधत्तक्षणे[1] ॥ 36 ॥

ततश्च सः,

मुक्ताहारैरिव हरिमणिस्यूतचित्रान्तरालै-
र्ज्योत्स्नाजालैरिव निपतितैः साकमङ्कप्रभाभिः ।
गङ्गापूरैरिव च यमुनावेणिसंभेदहृद्यै-
राकीर्णोऽभूदसितधवलैरायताक्ष्याः कटाक्षैः ॥ 37 ॥

तस्मिन्[2] समये,

द्राघीयांसःश्वसितमरुतो घर्मलेशा मुखेन्दौ
गात्रे सादो दृशि मुकुलता वेपथुश्चोरुकाण्डे ।
कृत्स्नास्तास्ताः स्मरविकृतयः केलिखेदेऽपि तुल्या-
स्सर्वाङ्गीणस्तदपि सहशो भेदको रोमभेदः ॥ 38 ॥

**नवमालिका** - (जनान्तिकं)

सहि मल्लिए, कीस उत्मणाअन्ती विअ दीससि ।

---

1. अधात् तत्क्षणे, $मु_2$, $त_2$ 2. add हि $मु_1$ 3. add उत्सुकेव, $मु_2$

[सखि मल्लिके, कस्मादुन्मनायमाना [3]इव दृश्यसे?]

(मल्लिका बाष्पायते)

**मन्दाकिनी** –

सस्वेदसंक्षालितसुन्दरेषु गात्रेषु तस्याः प्रतिबिम्बमानः ।
लावण्यदुग्धाब्धितरङ्गमध्ये तरङ्गितेन्दुः क्षणमीक्षते स्म ॥ 39॥

**मारुतः** – ततस्ततः ?

**मन्दाकिनी** –

अथ तां सा वर्णिनी, वत्से, सोऽयं-

वासन्तिकस्य मरुतो दयितःकुमारः
कुम्भोद्भवेन मुनिना स्वयमेधिताङ्गः ।
त्वामालिलोकयिषुरागमदस्य हि त्व-
माकर्ण्य किन्नरनुतं गुणमुत्सुकासीः ॥ 40॥
अतः स्वागतेन सम्भावय, इत्यकथयत् ।

**मारुतकलकण्ठौ**– (सश्लाघं)

भगवति, साऽपि भगवती युष्मत्तो गुणैरन्यूनेति मन्यामहे । कथ्यतां, अपि स्वागतमप्राक्षीत् सा कन्या ?

**मन्दाकिनी** –

न तावदसौ वाचनिकी[1] । अपि तु-

प्रागेव सा श्रवणजातदृढानुरागा
तं प्राप्तवन्तमभिगम्य विमोहनाङ्गम् ।

---

1. न तावत् सौवागतिकी, $मु_2$

भूयोऽपि मन्मथविलासजुषः कटाक्षान्
माहोत्पलीः स्रज इवामुचदस्य गात्रे ॥ 41॥

**मल्लिका** –जुज्जइ एदम् । कहं णु णिसग्गसालीण-
सहावो कुलकण्णआजणो साग्अं वाहरइ[1] ?
कहेहि, देण महाभाएण तदो किं पडिवण्णम् ?

[युज्यत एतत् । कथन्नु निसर्गशालिनस्वभावो
कुलकन्यकाजनः स्वागतं व्याहरति ? कथय,
तेन महाभागेन ततः किं प्रतिपन्नम् ?]

**मन्दाकिनी** – अथ सः,

लोभयन् भ्रमरमण्डलमारात्
सौरभेण मधुरस्य मुखेन्दोः ।
व्याहरद्दशनदीधितिपुञ्जै-
र्व्याकिरन्निव घनं घनसारम् ॥ 42॥

**मारुतः** – (सकौतुकं) कथमिव ?

**मन्दाकिनी** –

"भगवति, किं स्वागतसंभावनेन ? पश्य ।
सौहार्दशालिहृदयं सन्तोषस्मेरमेदुरा[2] दृष्टिः ।
संभावना सतामियमन्यस्त्वाचारडम्बरः कथितः" ॥43॥

इति ॥

**मारुतः** – साधु विदग्धमधुरं वचनम् । ततस्ततः ?

---

1. वाहरउ [व्याहरतु], मु$_2$ 2. ° तारका, त$_2$

**मन्दाकिनी** - ततश्च, तयोरन्यतरेण सख्या हारोऽयमत्रभवत्याः हंसमुखात् पतितो गृहीतोऽस्माभिरूरीक्रियतां भूयोऽपीति व्याहृते, सखी पुनस्तस्याः, महाभाग ! तारावलीव गगने हारावलीयं विराजतु[1] महाभागस्यैव दोरन्तरे । दीयतां पुनरियं दिव्यपरिमला माला । कुतूहलिनी खलु नो भर्तृदारिकेति सस्मितमकथयत् ।

**मारुतः**- ततस्ततः ?

**मन्दाकिनी** - ततश्च सा सखी,

तेन प्रहृष्टमनसा स्वकरेणदत्ता-
मादाय भृङ्गकलगीत[2]गुणां स्रजं ताम् ।
अग्राम्यकाकुवचनत्रपमाणदृष्टे-
रस्याः सलीलमवसज्जयति स्म कण्ठे ॥ 44॥

**कलकण्ठः** - किं तत्रापि हारमाल्ययोर्व्यत्ययः ?

**मन्दाकिनी** -

अत्रान्तरे झटिति कञ्चुकिभिः समेत्य
विद्याधरेन्द्रसचिवस्य पितुर्निदेशात् ।
हूता गृहानगमदङ्गजपीडिताङ्गी
बाला मुहुर्वलितकन्धरमीक्षमाणा ॥ 45॥

**मारुतः** - ततस्ततः ?

---

1. विहरतु, मु$_2$ 2. ॰ गणवीत, अ$_1$

**मन्दाकिनी** – गृहं गता च ।

तमहीनभुजङ्गभोगबाहुं सुकुमारे बत मानसे वहन्ती ।
विवशा श्लथनीविसीदङ्गं शयनोत्सङ्गमसेवत श्वसन्ती ॥ 46 ॥

अचिन्तयच्च ।

"अस्य खलु कस्याश्चिदतिशयालुपुण्यायामासक्तं हृदयम् । तथाहि-

वर्णान्तरेण बिसकाण्डसहोदरेण
स्पृष्टं शरीरमकठोरकरीरमुग्धम् ।
प्रम्लायतीव किमपि श्वसितानिलेन
बिम्बाधरोऽपि कुरुविन्ददलाभिरामः" ॥47॥

**नवमालिकाकालिन्द्यौ** – (जनान्तिकं)

सहि, तुएवि उत्तरिज्जञ्चले महाभाअपडिच्छन्दं दट्ठूण एसो एव्व सुलोओ कहिओ ।

[सखि, त्वयापि उत्तरीयाञ्चले महाभाग-प्रतिच्छन्दं दृष्ट्वा एष एव श्लोकः कथितः ।]

**मन्दाकिनी** – इति चिन्तयन्तीमेव तां विलम्ब्याऽऽगता ताम्बूलकरङ्कवाहिनी तत्सवयोभ्यामुपवर्णितं स्वप्नवृत्तान्तं सर्वमकथयत् ।

**मारुतः** – ततस्ततः ?

**मन्दाकिनी** –

बुद्ध्वा तस्य चिरोपगूढनिबिडं प्रेमाणमात्माश्रयं
सा प्रत्यागतजीविता द्विगुणिताऽनङ्गाऽपि निर्वृण्वती ।

तद्रूपं विरहावपाण्डुमधुरं न्यस्तोत्तरीयाञ्चले
दोर्मूलेऽलिखदस्य[1] चन्द्रधवलां तामेव हारावलीम् ॥ 48 ॥

**मल्लिका** - (स्तनांशुकं दृष्ट्वा, स्वगतं)

एत्थ वि हारसहिदा अज्जउत्तस्स पडिच्छन्दो ।

[अत्रापि हारसहितः आर्यपुत्रस्य प्रतिच्छन्दः ।]

**मन्दाकिनी** - सोऽपि पुनः,

तस्याः स्मरन्नुदमनायत सद्म यान्त्या
संभ्रान्तभृङ्गगणवारणकैतवेन ।
मध्ये सखि त्रिकविवर्तिविलोकितैक-
वक्षोजमर्द्धनयनाञ्चलवीक्षितायाः ॥ 49 ॥

**मारुतः** - ततस्ततः ?

**मन्दाकिनी** -ततश्च उत्कण्ठाविनोदनाय चित्रफलके,

तं शैलं तां सरितं तद्वल्लीसद्म तां चकोराक्षीम् ।
कन्दुकखेलनखिन्नामलिखत् कण्ठे च तां मालाम् ॥50॥

**नवमालिकाकालिन्द्यौ** - (जनान्तिकं)

सहि मल्लिए, तस्सिं वसन्तवणुज्जाणे लआणिऊढाहिं अह्मेहिं दिट्ठिम् तुमं वि चित्तफलए एव्वं एव्व लिहिदासि ।

[सखि मल्लिके, तस्मिन्वसन्तवनोद्यानेलता-निगूढाभ्यामावाभ्यां दृष्टम् त्वमपि चित्रफलके एवमेव लिखिताऽसि ।]

---

1. अलिखताऽस्य. $मु_1$

**मन्दाकिनी** – ततश्च, तत्सञ्चारसुभगे तस्मिन्नेवोद्याने कथञ्चित् अतिवाहितदिवसशेषो विरहिजनासुकवलनकाल भुजङ्ग्यां प्रवृत्तायां शर्वर्यां उदिते च पुरन्दरहरिदङ्गनाश्रवणमौक्तिकताटङ्के भगवति पीयूषभानौ दुःसहविरहानलदह्यमानः सखिभ्यां कल्पिते मृणालतल्पे पातिताङ्गः[1] तामेव विद्याधरकन्यामनुस्मरन्, असञ्जातनिद्रः कथमपि क्षपार्धमक्षपयत् ।

**मारुतः** – ततस्ततः ?

**मन्दाकिनी** – ततश्च अदूरवर्तिनश्चन्द्रकान्तघटितस्य क्रीडापर्वतस्य शिखरे दत्तकर्णः,

निद्राविमूकसत्वे[2] समये तस्मिन् धृताश्रुरश्रौषीत् ।
करुणं कमपि विलापं कर्णायुष्यञ्च धैर्यमथनञ्च ॥ 51 ॥

**मारुतः** – कीदृशः स विलापः ?

**मन्दाकिनी** –

हा चूत हा चम्पक हा लवङ्ग
हा मल्लि हा मालति हा कुरङ्गि ।
हा हंसि हा केकिनि हा चकोरि
स्मर्तव्यतामस्मि गता सखी वः ॥ 52 ॥

अपि च,

---

1. पतिताङ्गः, मु$_1$ 2. ° विहङ्गे, मै$_4$, के$_1$

देवि प्रसूतभुवने भगवति भक्तानुकम्पिनि भवानि ।
अन्यस्मिन्जन्मनि मे भर्ता भूयात् स मारुतकुमारः ॥53॥

इति ।

**मारुतः** – (ससंभ्रमं) ततस्ततः ?

**मन्दाकिनी** – ततश्च[1] तच्छ्रुत्वा साशङ्कमुत्थाय सह सखिभ्यामारूढक्रीडापर्वतो ददर्श तां कन्याम् ।

एकाकिनीमुरसिलम्बितदिव्यमालां
बाष्पायमाणवदनां मदनास्त्रभीताम् ।
म्लायन्मृणाललुलितालसकोमलाङ्गीं
बालां लतावलयवेष्टितकण्ठनालाम् ॥ 54 ॥

अथ झटित्युपसृत्य,

सुन्दरि मा मा साहसमाचर नन्वेष दासोऽहम् ।
अन्यस्मिन्जन्मनि यं प्रार्थयसे भीरु कमितारम् ॥ 55॥

इति वदन्नेव लतावलयं छित्वा कण्ठादपानयत्[2] ।

**मारुतः** –(सहर्षं) ततस्ततः ?

**मन्दाकिनी** – ततश्च सा,

कन्याविरुद्धमभिसारमवेत्य मुग्धा
गौर्याः पुरो बत जिहासुरसूनवाप्तम्[3] ।

---

1. om ततश्च, $मु_1$ 2. कण्ठमानयत् , $मु_1$
3. असूनुपेता, $मु_2$, $त_2$, $मै_1$, $मै_4$

तं वीक्ष्य वेपथुमती नमिताननेन्दुः
व्रीडाल्लिलेख चरणाग्रनखेन भूमिम् ॥ 56 ॥

**मारुतः** – ततस्ततः ?

**मन्दाकिनी** – (सबाष्पं, निश्वस्य)

हन्त, को[1] नाम दैवमतिवर्तेत ? यतस्तस्मिन् संभ्रमे लतापाशच्छेदव्यापृतादस्य कराच्च्युतं चित्रफलकं तत इतः स्खलनक्रमेणाधस्तात्तरुमुले काकतालीयन्यायेन[2] तत्कालागतस्य सुलभमन्युनाम्नो महर्षेः शिरसि न्यपतत्[3] ।

(सर्वे विषादं नाटयन्ति)

**मारुतः** – (निश्वस्य)

नह्यनन्तराया उत्सवाः । ततस्ततः ?

**मन्दाकिनी** – ततश्च आबद्धभ्रुकुटीकरालमदनः स मुनिः, आः दुरात्मन् ! कन्याकामुक ! यतो रागजसत्व[4]मनागसो मम शिरसि अपीपतत् दारुफलकं, अतः पत मानुषीं योनिम् । इयमपि कुलटा[5] प्राप्य[6] मानुषीभावं, जन्मान्तरेऽपि प्रथम एव त्वत्सङ्गमे मूर्च्छत्विति, अशनिमिव जलदः शापमसृजत् ।

(मल्लिका वेपते । सर्वे बाष्पं नाटयन्ति)

---

1. add हि, $मु_1$ 2. ताल °, $मु_1$
3. खणादित्यपतत्, $मु_2$, $त_2$, $त_1$, $अ_1$
4. रागान्धस्त्व, $त_2$, $के_2$ 5. कुटिला, $मै_1$ 6. उपेत्य, $मु_1$

**मारुतः** – हन्त महान् प्रमादः। ततस्ततः ?

**मन्दाकिनी** – (सबाष्पगद्गदं)

ततः तच्छापदहनदग्धाङ्गाभ्यां ताभ्यां तत्क्षण एव विलिल्ये ।

**मारुतः** – ततः, (इत्यर्धोक्ते बाष्परुद्धकण्ठः तूष्णीं भवति)

**मन्दाकिनी** – अथ तौ सखायौ शापश्रवणभयनिमीलिते लोचने कथञ्चिदुन्मील्य,

नावेक्षेतामग्रे प्रियमित्रं नापि तां कन्याम् ।
अपि तु स्रस्तं तस्याश्चूडारत्नं तदुत्तरीयञ्च ॥ 57॥

**मारुतः** – ततस्ततः ?

**मन्दाकिनी** –ततश्च तयोरन्यतरः सुहृद्विरहजायमानं शोकं धारयितुमपारयन्, "भगवति कात्यायनि, प्रसीद । जननान्तरेऽपि[1] प्रियसुहृद एवानुचरो भूयासमिति," प्रार्थयमानस्तस्यैव केलिपर्वतस्य भृगौ निपत्य सुहृद्गतामेव गतिमयासीत् ।

**मारुतः** – (सनिर्वेदं)

हन्त सर्वनाशोऽयमुपस्थितः ।

**कलकण्ठः** – (सश्लाघं)

सौहार्दसदृशमाचेष्टितं तेन ।

---

1. om अपि, मु₁

**मन्दाकिनी**– इतरः पुनः सख्युरार्ति[1]दर्शनेनाप्यधिक-सञ्जातशोकमन्युस्तं चूडामणिं तच्च सुहृत्प्रतिच्छन्दसुभगं दुकूलं तदपि चित्रफलकं सत्वरं गृहीत्वा, "धिक् त्वां, मूर्ख नृशंस, मुनिपाश, कथं सर्वेषां नः सङ्घातमृत्युरसीति बाष्परुद्धनयनः पुनः पुनरनिन्दत् ।

**मारुतः** – (सनिर्वेदं)

सेयं ज्वलतोऽग्नेः घृतवृष्टिः । ततस्ततः ?

**मन्दाकिनी** – ततश्च भूयः प्रकुपितस्स मुनिः, यतः सुहृत्स्नेहेन राक्षस इव व्याहरसि[2], तेन राक्षस एव भव । अयमेव ते मित्रं शत्रुर्भवत्विति उत्कीर्णशापः स्वच्छन्दमगच्छत्[3] ।

**मारुतः** – दुर्लङ्घ्यं खलु विधातुर्वैशसम् ।

**मन्दाकिनी** – ततश्च तस्मिन्नपि सख्यौ दुकूलादि हस्त एव प्राप्तमुनिशापोचितवपुस्त्रासित[4]सकलभूते जाते यातुधाने, कात्यायनीभवनवर्तिनी ध्याननयन-दृष्टसकलानर्था,

तत्र हा हेति संभ्रान्ता वर्णिनी सा समागमत् ।
गौर्याश्च स्निग्धमधुरा गगने गीरजृम्भत ॥ 58 ॥

---

1. सखा तद्, $मु_2$, $त_2$ 2. व्यवहरसि, $मै_1$ 3. स्वेच्छमगमत् , $मु_2$
4.शापोचितं उषित्रासित, $त_2$; शापोचितवपुषि उत्त्रासित, $के_1$

**मारुतः** – (सोच्छ्वासं)

कीदृशी सा गीः ?

**मन्दाकिनी**–

पुत्रीयतोरपत्ये स्यातां मद्भक्तयोरिमौ भूमौ ।
तावितरेतरदत्तौ मालाहारौ च सहजौ स्ताम् ॥ 59॥

अपि च इतोऽपि सविशेषसौन्दर्यशालिविग्रह-परिग्रहयोरनयोर्भविता परस्परवर्धमानरागरमणीयः समागमः । सा पुनर्मुनिशापप्रयुक्ता प्रथमसङ्गमे मूर्च्छा, मूर्च्छाहरस्यास्य चूडामणेः स्पर्शमात्रेण शाम्यत्विति ।

**मारुतः** – (सहर्षं)

हन्त, भगवत्यनुग्रहेण स्वतोऽयमजनि विशापः[1]। अथ तयो सख्योः का प्रवृत्तिः ?

**मन्दाकिनी** – पुनश्च सा गीरुदचलम् । योऽयं भृगौ निपतितः सोऽपि एष इव सविशेषसुन्दरवपुः विशिष्ट एव जातो भूयादेवमेवास्य परमं मित्रम् । अन्यः पुनः यातुधानीभूतः मित्रेणैव शत्रुणा निहतः तत्क्षणप्रत्यापन्नस्वरूपो भूयात् भूयोऽपि स्निग्धः सखेति ।

**कलकण्ठः** – दिष्ट्या तावप्यनुगृहीतौ ।

**मारुतः** – भगवति, क्व ते महापुरुषाः, किं प्रेयस्या [2]समगमत्तरुणः ?

---

1. om वि °, $म_1$, $मु_2$, $त_2$ 2. समगमंस्त स तरुणः, $मु_2$

**मन्दाकिनी** – (विलोक्य, सहर्षं)

या सा कन्या स्मरजयरमा

(सबाष्पं मल्लिकामालिङ्ग्य)

सा पुनर्मल्लिकेयं

(सर्वे विस्मयं नाटयन्ति)

योऽस्याः प्रेम्णः परमसि पदं मारुतस्त्वं स एव।

**नवमालिकारमयन्तिकाकालिन्द्यः** – (सहर्षं)

एत्थ णो संशओ। [अत्र नो संशयः।]

**मन्दाकिनी** –एकं मित्रं कलय कलकण्ठाख्य-

**मारुतः** – (कलकण्ठमालिङ्ग्य)

सखे दिष्ट्या त्वामस्मिन्नपि जन्मनि पश्यामि।

**मन्दाकिनी** – मन्यत्पुनस्तं

माकन्दं यो रजनिचरतां त्याजितोऽभूत्त्वयैव ॥ 60॥

(मल्लिकामारुतकलकण्ठाः मन्दाकिनी च
हर्षातिशयेन मूर्च्छन्ति)

**इतराः** – (सविस्मयं, ससम्भ्रमञ्च)

हत्थि मुच्छिदा एदे। हन्त सोओविअ हरिसो
वि णिमित्तं [1]मुच्छाए। ता सीअलेहिं आसासेह्म।

---

1. add एव्व, मु₁

[हन्त, मुर्च्छिता एते। हन्त, शोक इव हर्षोऽपि निमित्तं मुर्च्छायाः। तस्माच्छीतलैराश्वासयामः।]

(मल्लिका सत्वरं प्रबुध्यते)

**नवमालिका** - (सहर्षं)

कालिन्दि, सीमन्तमणिप्पहावेण तुह ण लङ्घिआ पिअसही मुच्छाए।

[कालिन्दि, सीमन्तमणिप्रभावेन तथा न लङ्घिता प्रियसखी मूर्च्छया।]

**मल्लिका** - (सोत्कण्ठास्मरणं)

हन्त पसुत्तपडिबुद्धा विअ अज्ज सव्वं जाणामि तं तं वुत्तन्तम्।

(सहर्षं)

अम्महे भअवदि वि सा एव्व।

(परिवृत्य, मूर्च्छितान् तान् दृष्ट्वा, सावेगं)

हत्थि, हत्थि, किं मुच्छिदा एदे ?

[(सोत्कण्ठास्मरणं) हन्त ! प्रसुप्तप्रतिबुद्धेवाद्य सर्वं जानामि तं तं वृत्तान्तम्। (सहर्षं) अहो भगवत्यपि सैव। (परिवृत्य, मूर्च्छितान् तान् दृष्ट्वा, सावेगं) हन्त, हन्त, किं मूर्च्छिता एते ?]

(कालिन्दी मन्दाकिनीं धारयति)

**मल्लिका** – सहि रमअंतिए ! तुमं अ कलकण्ठं धारेहि ।

[सखि रमयन्तिके, त्वं च कलकण्ठं धारय ।]

**नवमालिका** – (सस्मितं)

मल्लिए, तुमं वि मारुअम् ।

[मल्लिके, त्वमपि मारुतम् ।]

**मल्लिका** – (सहर्षलज्जं उत्सङ्गेन धारयन्ती मारुतं विलोक्य, सबाष्पं, स्वगतं)

हन्त सिविणआदो आरहिअ एत्तिअं समअं मह किदे तह दुव्विसहं मअणसन्दावं अणुभूदवन्दो अज्जउत्तो[1] ।

(प्रकाशं)

अज्जउत्त उट्ठेहि ।

[हन्त, स्वप्नादारभ्य एतावन्तं समयं मम कृते दुर्विषहं मदनसन्तापमनुभूतवान् आर्यपुत्रः । (प्रकाशं) आर्यपुत्र, उत्तिष्ठ ।)]

(त्रयोऽपि प्रबुध्यन्ते)

**मारुतः** – (मल्लिकामालिङ्गन्, सोच्छ्वासं)

अयि मल्लिके,

तथागतं परां काष्टां प्रेम त्वद्गोचरं प्रिये ।
साक्षाद्भूतमिवाभाति प्राग्जन्म स्मरतोऽद्य मे ॥ 61 ॥

---

1. दुव्विसहो मअणसन्दावो अणुभूदो अज्जउत्तेण, [दुर्विषहो मदनसन्तापोऽनुभूतो आर्यपुत्रेण], मै$_4$, मु$_2$, के$_3$, के$_4$, के$_5$, अ$_2$

(मन्दाकिनीं प्रति)

भगवति, अवगीतप्रभावे !

भवतीमपि जानामि तामप्येतामिव व्यवहरन्तीम्।

अवगच्छामि साक्षात्[1] संप्रति[2] युष्माभिर्निवेदितं जननान्तरोदन्तम्। एतानि पुनर्विशेषतो न मुञ्चन्ति हृदयम्।

(मल्लिकां विलोक्य)

यत्तत्कन्दुकखेलनं भ्रमिचलन्नेत्राम्बुनीलाम्बरं
यत्तत्तातनियोगतो मयि मुहुर्दत्ते क्षणं प्रस्थितम्।
किञ्चोद्बन्धनसाहसे निशि मया छिन्ने लताबन्धने
व्रीडासाध्वसहर्षशंसि वदनं यत्तच्च तन्व्या स्थितम् ॥ 62॥

**मन्दाकिनी** – वत्स मारुत, एवं खलु देव्याः कात्यायन्या गीः। एतदवधिरेव शापजन्मा दोषः[3]। यो हि [4]स्मृतिबीजं संस्कारं तिरोधात्।

**सारसिका** – (स्वगतं)
पुढमं एव्व एसो सव्वो वुत्तन्दो कहिओ मह कण्णे भअवदीए।

[प्रथममेव एष सर्वो वृत्तान्तः कथितो मम कर्णे भगवत्या।]

---

1. om साक्षात्, $मु_2$, $त_2$ 2. add कात्स्न्र्येन, $मु_2$, $त_2$
3. एतदवधि भवता मुनिशापजन्मा दोष इति, $त_2$, $के_1$
4. विस्मृत °, $मु_1$

**कलकण्ठः** – (ऊर्ध्वमवालोक्य, सविस्मयं)
पश्य पश्य, आश्चर्यम् !

किं चन्द्रमा भुवमुपैति विसर्पदंशुः
(निर्वर्ण्य)
किं रूढपक्षपटलो रजताद्रिरुच्चैः ।
(पुनर्निर्वर्ण्य)
ज्ञातं चलध्वजशिखोल्लिखिताम्बुवाहं
श्वेतं विमानमधिसिन्धु सितैव[1] नौका ॥ 63॥

(सर्वे सविस्मयं पश्यन्ति)

**मन्दाकिनी** – (विलोक्य)
वत्स कलकण्ठ, सत्यं विमानमेतत् ।
(पुनर्निर्वर्ण्य)
अत्र च अपरिमितपरिवारः कोऽपि दिव्यपुरुषः ।

सितातपत्री चलरत्नकुण्डलः
सचापपाणिश्च सुवर्णविग्रहः ।

(सप्रत्यभिज्ञं निर्वर्ण्य, सानन्दं)

प्रियं नः प्रियं नः ।

सुतां वरं चेक्षितुमुत्सुकः स्वयं
समेति विश्वावसुरेष मे सखा ॥ 64॥

**मल्लिका** – (विलोक्य, सहर्षं सबाष्पञ्च)

---

1. श्वेतं विमानमिदमम्बरसिन्धु, मु$_2$, त$_2$

अम्महे तादो आअदो[1] ।

[अहो तात आगतः ।]

**मारुतः** – भगवति, पश्य माकन्दोऽपि दक्षिणे भागे ।

(सर्वे[2] ससंभ्रममुत्तिष्ठन्ति । ततः प्रविशति अम्बरयानेन विमानस्थः सह माकन्देन यशोद्दिष्टो विश्वावसुः )

**विश्वावसुः** – अप्येतदेव जामातुर्मे मारुतस्य कुसुम-पुरस्कन्दनिविष्टं स्कन्धावारपदम् ?

**माकन्दः** – (हस्तेन दर्शयन्)

ननु वदामि सख्युर्मे निवासभवनमप्येतदेवेति ।

(निर्वर्ण्य, सहर्षं)

किं बहुना[3]? एष खलु सह भगवत्या मन्दाकिन्या मल्लिकासखो मारुतः सम्भ्रमविमुक्तासनः सम्भावयन्त्यत्रभवतः समागममहोत्सवम् ।

**विस्वावसुः** – (तथा ससंभ्रमं[4] मारुतं विलोक्य, सहर्षं, स्वगतं)

अद्यैव मे[5] प्रसीदति हृदयम् । तथाहि-

जायते सह कन्याभिः शोकशङ्कुः कुटुम्बिनाम् ।
भज्यते च स्वयं तासां लब्धे सुसदृशे वरे ॥ 65॥

---

1. ताआ आअच्छदइ । [तातः आगच्छति ।] मु$_2$, मै$_4$
2. om सर्वे, मु$_1$
3. om किं बहुना, मु$_1$
4. सुन्दरं, मु$_2$,त$_2$, के$_1$
5. अद्य मे चिरस्य, मु$_2$, त$_2$

(निर्वर्ण्य, सप्रत्यभिज्ञं)

स एष दोरन्तरे मुक्ताहारः यो हि[1] मया वत्सायाः मल्लिकायाः कण्ठे स्वयमामुक्तः ।

(स्मृत्वा)

अयं हि,

शेषेण पुरुहूताय पुरुहूतेन सादरम् ।
विद्याधराधिराजाय तेन मह्यं समर्पितः ॥ 66॥

**माकन्दः**- (विलोक्य)
सन्त्रसति विमानं संस्प्रष्टुं भुवम्[2]। तदवतरतु तत्रभवान् ।

(विश्वावसुः माकन्दहस्तावलम्ब्य[3] विमानावतरणं नाटयति)

**मन्दाकिनी** - (सहर्षमुपसृत्य, सगद्गदं)
स्वागतं विद्याधरामात्यस्य ।

**विश्वावसुः** - अये, भगवति मन्दाकिनि ! नमोऽस्तु अनिशमव्याजोपकारनिरतायै भवत्यै ।

(मारुतः सविनयं प्रणमति । विश्वावसुः सपुलकाभ्यां दोर्भ्यां प्रणमन्तमेव परिरम्भते । परिजनः काञ्चनासनमुपश्लेषयति । विश्वावसुः उपविशति)

---

1. add प्राक्, $मु_2$, $त_2$, $अ_1$ 2. हन्त, सन्निकृष्टाः स्मः भुवः, $त_2$, $अ_1$, $के_1$ 3. हस्तावलम्बी, $मु_2$, $त_2$, $के_1$, $अ_1$

**मारुतकलकण्ठौ** – (माकन्दमालिङ्ग्य)
सखे, दिष्टया सर्वे वयं सङ्गता स्मः ।

(सर्वे यथोचितमुपविशन्ति)

**मल्लिका** – (सबाष्पमुपसृत्य) हा ताद ! हा तात!
(विश्वासुः बाष्परुद्धनयनः करतलेनालम्ब्य परिरभ्योत्सङ्गेन धारयन्, [1]हर्षस्तिमितहृदयः क्षणं तूष्णीं भवति । मल्लिका पितुः कण्ठलग्ना भवति)

**विश्वावसुः** – (मल्लिकां निर्वर्ण्य, स्वगतं)
अहो भगवत्याः कात्यायन्याः प्रसादेन प्रागवस्थातो न हीयते वत्सायाः[2] अङ्गानां[3] संस्थानविशेषः ।

(सवात्सल्यातिशयं)

गात्रं शिरीषदलकोमलतास्पदं तद् –
वर्णस्तु हेमकदलीनवकन्दलश्रीः ।
[4]संरक्तकोकिलकुहूमधुरः स्वरस्सः

(निर्वर्ण्य)

सौगन्ध्यमाङ्गमवधीरितपुण्डरीकम्[5] ॥ 67 ॥

(मल्लिका पत्युर्विलज्जमाना उत्सङ्गादुत्थाय पार्श्वे तिष्ठति)

**मारुतः** – (सानन्दं, सानुरागश्च)

---

1. अस्तिमित °, मु$_1$ 2. om वत्सायाः, मु$_1$ 3. अङ्कानां, ते$_2$
4.° कोमल, मु$_1$ 5. सौन्दर्यमुज्झिततुलं तदतोऽधिकं वा, मु$_2$, मै$_2$

हर्षनिश्चलविलोचनोन्मिषत्
[1]पक्ष्मपालिगलदश्रुमन्थरम् ।
मल्लिका नमयति त्रपावती
फुल्लकोकनदतुल्यमाननम् ॥ 68॥

**मल्लिका** – (विश्वावसुं स्मरन्ती सस्नेहं, स्वगतं)
दुवेसु वि तादेसु सरिसो एव्व मह हिअआवत्था।
[द्वयोरपि तातयोः सदृश एव मम हृदयावस्था।]

**विश्वावसुः** –(विमृश्य)
भगवति, मन्दाकिनि, अनुग्रहायैव परं तत्रभवतो महर्षेः सुलभमन्योः शापः । येन पावनोर्जस्वलचरितौ ब्रह्मदत्तविश्वावसू अपि वयमिव अपत्यवतां धुरमारोपितौ ।

**मन्दाकिनी** – (सश्लाघं)
अतिमनोहरमभिहितम् । चतुर्णामपि वां परस्पर-तुल्यानां सदृशावेव वत्सौ ।

(विमृश्य)

देवस्य मारुतस्यैव ब्रह्मदत्तस्य नन्वयम् ।
विश्वावसो यथेयं ते तथा विश्वावसोरपि ॥ 69॥

(विश्वावसुः मल्लिकामारुतौ दृष्ट्वा हृदये[2] सत्यं मन्यते)

---

1. ॰मिल, मु$_2$, के$_1$ 2. om हृदये, मु$_1$

**रमयन्तिकानवमालिकाकालिन्द्यः** – (परस्परं जनान्तिकं)
अम्महे भअवदीए मन्दाइणीए पहावो । पुढमं सम्बरअस्स वञ्चणं तह तह कुणन्तीए विसण्णाणन्दजणणं एक्कं णिव्वूढं पअरणम् । अह उण कहाकहणेण अण्णो पबन्धो दंसिओ ।

[अहो भगवत्याः मन्दाकिन्याः प्रभावः । प्रथमं शम्बरकस्य वञ्चनं तथा तथा कुर्वन्त्या विस्मयानन्दजननमेकं निर्व्यूढं प्रकरणम् । अद्य पुनः कथाकथनेन अन्यः प्रबन्धो दर्शितः ।]

**विश्वावसुः** – (परिवृत्य रमयन्तिकादीर्विलोक्य)
भगवति, का पुनरेताः ?

**मल्लिका** –(शनैः पितुः स्कन्धावलम्बिनी, कर्णे)
एदाओ सव्वाओ मह पिअसहीओ ।
(पृथाग्पृथग्निर्दिश्य)
एसा सव्वाओ मह सहपंसुकीलणादो आरहिअ अप्पणिव्विसेसा पिअसही णोमालिआ णाम ।
[(पितुः स्कन्धावलम्बिनी कर्णे) एताः सर्वाः मम प्रियसख्यः । (पृथग्पृथग्निर्दिश्य) एषा मम सहपांसुक्रीडनादारभ्य आत्मनिर्विशेषा प्रियसखी नवमालिका नाम ।]

**विश्वावसुः** – (स्वयमपि शनैरेव)
अपरे पुनः के?

---

1. om सव्वाओ, मु,

**मल्लिका** –एदाओ भअवदीए मन्दाइणीए सारसिआ-कालिन्दीओ णाम महाभाआओ अन्तेवासिणी।

[एते भगवत्याः मन्दाकिन्याः सारसिका-कालिन्द्यौ नाम महाभागाया अन्तेवासिन्यौ ।]

**विश्वावसुः** – वत्से, अन्यामपि कथय ।

**मल्लिका** – एसा अमच्चविह्नुराअउत्तिआ रमअंतिआ णाम पिअसहस्स कलअण्ठस्स वल्लहा ।

[एषा अमात्यविष्णुरातपुत्रिका रमयन्तिका नाम प्रियसखस्य कलकण्ठस्य वल्लभा ।]

**विश्वावसुः** – (सबहुमानं, स्वगतं)

कथितं कृत्स्नमेतन्माकन्देन । युज्यत एषा विशुद्धोदाररूपा अव्याकृतपरमाभिजात्या कलकण्ठस्य ।

(प्रकाशं , स्मयमानः)

वत्से, कस्य प्रियसखः कलकण्ठः ?

(मल्लिका सलज्जमपक्रामति)

**विश्वावसुः** – (सानन्दं)[1]

अस्यां[2] जन्मनिरूढो मनोरथो मेऽद्य सम्पूर्णः ।
पश्यामि भर्तृवार्ताग्रहणव्रीडागुरुं यदिमाम्[3] ॥ 70॥

---

1. add स्वगतं, मै$_4$ 2. अस्या, मु$_2$, अ$_1$
3. वार्ताहेपितनमितानना यदिमाम्, मु$_2$, त$_2$

**मन्दाकिनी** – (विदितलज्जाहेतुः सस्मितं)
किमिति लज्जते वत्सा ?

**विश्वावसुः** – न मया ज्ञायते । केवलं रमयन्तिकां प्रियसखस्य वल्लभेति निवेदयन्ती, कस्य प्रियसख इति पृष्टा, लज्जते ।

(सर्वे स्मितगर्भा भवन्ति । रमयन्तिका मल्लिकया सह अपत्रपते)

**मारुतः** – (तथाभूतां प्रियां दृष्ट्वा, साभिलाषं, स्वगतं)
हन्त, गुरुजनसमक्षामिति न पारयामि ।

घनपुलकवालकीर्णे कपोलमूले निवेशयन्वदनम् ।
मन्दाक्षमुकुलितबालां[1] वाञ्छामि परिरब्धुम् ॥ 71॥

(प्रविश्य पटाक्षेपेण भ्रमरकः)

**भ्रमरकः** –(प्रणम्य)
भअवदि,अमच्चवीसवसुविह्णुराअसहिएण महाराएण पेसिदा एसा पत्तिआ ।

[भगवति, अमात्यविश्वावसुविष्णुरातसहितेन महाराजेन प्रेषिता एषा पत्रिका ।]

**मन्दाकिनी** – (गृहीत्वा वाचयति)
"विश्वानन्दमृगाङ्क वत्स भवता व्यूढाभवन्मल्लिका[2]
यत्तं शम्बरकं निबध्य विटपे तत्केन न स्मर्यते[3] ।

---

1. मु$_1$ **omits from** घनपुलक° **to** बालां;
2.° मारुत भवान् पर्यग्रहीन्मल्लिकां, मु$_2$, त$_2$
3. स्तूयते, मु$_2$, त$_2$

यच्चोवाह[1] स विष्णुराततनयां मन्दाकिनीवेषवान्
मित्रं ते कलकण्ठ ऊर्जितमतिस्तच्चानुमोदामहे" ॥ 72॥

इति ॥

(सर्वे हर्षं नाटयन्ति)

**विश्वावसुः** – (सश्लाघं)
अहो महानयं भगवत्याः नयप्रभावः । ज्ञातं मे[2] सर्वमेतन्माकन्दस्य मुखात् ।

**नवमालिका** – सहि रमअंतिए, पेच्छ । महुअरिआ पडिहारभूमिम्मि णच्चइ ।

[सखि रमयन्तिके, पश्य । मधुकरिका प्रतिहारभूमौ नृत्यति ।]

**मन्दाकिनी** – वत्स मारुत! किं ते भूयः प्रियमुपहरामि ?

**मारुतः** –

कल्याणीश्चिरकाङ्क्षितामसुलभां दिष्टया लभे वल्लभां[3]
सन्तुष्टयैव[4] तथैव बन्धव इमे जन्मद्धयासादिताः ।
प्रेयान्मे कलकण्ठ एष दयितासङ्गेन संवर्धते[5]
माकन्दं पुनरप्यवैमि सुहृदं किं मेऽस्त्यतोऽपि प्रियम् ॥73॥

---

1. यच्चोपायत, $मु_2$, $त_2$
2. मया, $मु_2$, $त_2$
3. मल्लिकां, $त_2$, $अ_1$
4. सन्तुष्यन्ति, $मु_2$, $त_2$, $अ_1$
5. सम्मोदते, $मु_2$

तथापीदमस्तु भरतवाक्यम् ।

भद्रं भजन्तु विश्वे भक्तिर्विष्णौ नृणां शिवे वास्तु ।
धर्मे रमन्तु भूपाः श्रीमन्तः सन्तु विद्वांसः ॥ 74॥

(इति निष्क्रान्ताः सर्वे)[1]

उद्दण्डं रङ्गनाथः सुतमलभत यं रङ्गदेवी तथाम्बा
त्रैविद्येशो महर्षिर्निरवधिमहिमा यद्धिते जागरूकः ।
तस्य श्रीविक्रमाज्ञाबहुमतिरचिते मल्लिकामारुतेऽस्मिन्
मूर्धन्योऽगान्नवानां प्रकरणतिलके निषकलङ्कोऽयमङ्कः॥

॥ इति माल्लिकामारुतम् समाप्तम् ॥



1. **add** इति श्रीमदुद्दण्डिकवीन्द्रकृते मल्लिकामारुते प्रकरयणरत्ने
दशमोऽङ्कः समाप्तः ।

# BIBLIOGRAPHY

(The abbreviation used are given in brackets)


## I. EDITIONS OF THE TXET UNDER STUDY :

1. **Mallikamaruta** of Dandin (मृ.) with **C. Parimala** of Ranganatha, ED., and Pub., Pandit Jibananda Vidyasagara, Sarasvati Press, Calcutta, 1878.

2. **Mallikamaruta** of Uddandakavindra (मृ.) with **C. Padavivrti** of Tirumala Tatacarya, Vidya-tarangini Press, Mysore, 1879, (in Telugu script).

## II. WORKS (GENERAL)

1. The **Amarakosa** of Amarasimha **(Amara.)**, Ed. Wasudev Laxman Shastri Pansikar, Nirnaya Sagar Press, Bombay, 1912.

2. **Bhavaprakasanam** of Saradatanaya, General Ed., B. Bhattacarya, GOS. No. XLV, Oriental Institute, Baroda, 1930.

3. **Caturbhani** (CB), Ed. Sarma, D. C., and Krishna, Dakshin Bharati Sanskrita Series No.1. Patna, 1922.

4. **Candralokam,** with **C. Bhudharanjani,** Vavilla Ramaswami Sastrurlu and Sons., Madras, 1969.

5 **Chhandonusasana** of Hemacandra, Critically Ed. Velankar, H. D., Singhi Jain Granthamala Series 49, Bharatiya Vidya Bhavan, Bombay-7, 1961.

6. **Haricarita** by Paramesvara Bhatta (of Payyur), Ed. Pandit Krishnamacharya, V., The Adyar Library Series No. 63, 1948.

7. **Jaiminiyasutrarthasangraha,** of Ṛṣiputraparamēśvarā (JSS.) Ed. Narayana pillai, P. K, (Dr.)., T. S. S. No. 156, Trivandrum, 1952.

8. **Kadambari** of Banabhatta (Kad.) with C. by Banuchand Siddhachand Gani, and Hindi Tr. by Harischandra Vidyalankara, Motilal Banarsidass, Delhi, Reprint, 1983.

9. The **Kamasutram** of Sri Vatsyana Muni, (Kam. Su.), with C. Jayamangala of Sri Yasodhara, Ed. with Hindi C. by Sri Devdutta Sastri, The Chowkhambha Sanskrit Series Office, Varanasi-1, 1964.

10. **Kumarasambhava** of Kalidasa (Kumara.) Ed. Kale, M. R., Motilal Banarsidass, Delhi, 1967.

11. **Kokilasandesa** of Uddanda (KSA), Ed. Anantha-narayana Sastri, P. S., The Mangalodayam Co., Ltd., Trichur, 1913.

12. **Kokilasandesa** of Uddanda (Kokila°) Ed. Unni, N. P. (Dr.) College Book House, Trivandrum, 1971.

13. **Mallikamakarandanataka** of Ramachandra Ed. Munshi Shri Punyavijayaji with Intro., notes., etc., by V. M. Kulkarni, L. D., Institute of Indology, Ahmedabad-9, 1983.

14. **Prakrtaprakasa** of Vararuci with C. of Ramapanivada, (Pr. Pr.), Ed. Kunhan Raja C., (Dr.), and Ramachandra Sarma, K., The Adyar library Series No. 54, 1946.

15. **Mayurasandesa** of Udaya, (Mayura), Ed., Kunhan Raja, C., (Dr.), Poona Oriental Series No. 84. 1944.

16. **Malatimadhava** of Bhavabhuti, with C. Rasamanjari of Purnasarasvati (Malati-P)Pub. K. S. Mahadeva Sastri,

17. **Malatimadhava** of Bhavabhuti (Malati) with C. of Jagaddhara, Ed. Kale, M. R., Motilal Banarsidass, Reprint, Delhi, 1983.

18. **Tantrasamuccaya** of Narayana with C. **Vimarsini** of Sankara and **Virarana** of Narayanasisya, Ed. Raghavan Pillai, K, Oriental Research Institute, University of Kerala, TSS. No. 200, Trivandrum, 1961.

19. **Uddandikavermallikamarutam**, by Mirashi, V. V. Sagarika, Vol. VI. 3.

20. **Bhavaprakasa** of Saradatanya, (BPR.), Ed. with Intro., Indices by Yadugiri Yatirajasvami of Melkot, and Ramasvami Sastri, K. S., GOS. 45, Baroda, 1980.

21. **Dasarupaka** of Dhananjaya with C. Dhanika, Cc. Laghutika, by Bhattanrsimha, Adyar Library, Madras, 1960.

22. The **Dasarupaka** of Dhananjaya, with the C. of Dhanika Ed., Pansikar, N. L. S. IV. Ed., Nirnayasagar, Bombay, 1928.

23. **Dhvanyaloka** by Anandarardhana and **C. Locana** by Abhinavagupta with Cc. Kaumudi by Uttungodaya and Upalocana by Kuppusvami sastri (Uddoyota one), Ed., Kuppusvami sastri, S., Ramachandra Diksitar (T.V.) and Cintamani T. R. KSRI, Madras, 1944.

24. **Kuvalayananda** of Srimad Appayya Dikshita, with the text of **Candraloka** of Jayadeva, and C. **Alankaracandrika** of Vaidyanathasuri. Nirnayasagar, 1917.

25. **Natakalakshanaratnakosa** with C. Prabha in Hindi Chowkhamba sanskrit Series, (NLRK) The Jaikrishnadas Pracya Vidya Granthamala No. 3, Varanasi, 1972.

26. **Natyadarpana** of Ramachandra and Gunacandra (ND. DU), Ed. Nagendra, Hindi Vibhag, Visvavidyalaya, Delhi, 1961.

27. The **Natyadarpana** of Ramachandra and Gunacandra, (ND) A Critical Study by Trivedi, K.H., L. D. Institute of Indology, Ahmecabad, 1966.

28. **Natyadarpana** of Ramachandra and Gunacandra with auto C. Ed., with preface in English and Indices by Shrigondekar G. K., and Gandhi, L. B.,. L. D. Series, Ahmedabad, II Ed., 1959.

29. **Natyadarpana** of Ramachandra and Gunachandra, (ND.LDS), LD, Series No. 9, Ahmedabad, 1966.

30. The **Natyasastra** ascribed to Bharatamuni, Tr. Manmohan Ghosh, (NS. AB) Biliothica Indica - A collection of Oriental Works, Work No. 272, Issue No. 1559, Asiatic Society of Bengal, Calcutta, 1951.

31. The **Natyasastra** of Bharata, (NS. GOS.), Gaekwad Oriental Series Vol. II, Baroda, 1934.

32. **Natyasastra** of Bharata, (NS. KSS) Ed., Pt. Batuka Natha Sharma and Pt. Baladeva Upadhyaya The Kashi Sanskri Series No. 60, Chowkhambha Sanskrit Sansthan, Varanasi, Second Edition, 1980.

33. **Sahityapanpana** of Visvanatha (SD) with C. Locana of Anantadasa and **Vijnanapriya** of Bhattacarya Mahesvara Tarkalankara, Ed., with noted by Pt. Karunakar Kar, Motilal Banarsidass, Lahore, 1938.

34. **Sahityadarpana** of Visvanatha, (SD. KSS.) Kashi Sanskrit Series No. 145, Chowkhambha Sanskrit Seriese Offiec, Varanasi, 1955.

35. Mirror of Composition (Tr. of Sahityadarpana of Visvanatha) Tr. Pramada Dasa Mitra, Motilal Banarsidass, Delhi, 1956.

36. Bhoja's **Srngaraprakasa**, (Sr. Pr.) Raghavan, V., Madras-14, 1963.

37. **Vakroktijivita** of Kuntaka, (VO. KLM) Ed., De., S. K., III Ed., Firma KL Munshi Ltd., Calcutta, 1961.

38. The **Vakroktijivita** of Kuntaka, Critically Ed. with variants, (VJ) Intro., & English Tr., by Krishnamurthy, K., Kanatak University, Dharwad, 1977.

39. **Vrttaratnakara** of Bhattakedara with C. Prajnanatosini (VR) Motilal Banarsidass, Delhi, II Ed., 1972, Reprint, 1982.

40. The **Shadhbashachandrika** of Lakshmidhara Ed., Trivedi, K. P. (SBC) Bombay Sanskrit & Prakrt

Series No. LXXI, Department of Public Instruction, Bombay, 1916.

41. **Prakrtapaingalasutra** with C. of Lakshminatha Bhatia (Pr. Ping) Ed. Pandit Sivadatta and Kasinath Pandurang Parab, Karyamala Series No.41, Nirnayasagar press, Bombay, 1894.

**III. BOOKS (ENGLISH)**

1. Bhavabhuti, Bhat, G. K. Sahitya Academy, New Delhi-1, Second Printing, 1984.

2. Bhavabhuti, Mirashi, V. V., Motilal Banarsidass, Delhi, 1974.

3. A Bibliography of Sanskrit Darma, Schuyler, M., New York, 1906.

4. The Contribhution of Kerala to Sanskrit Literature, Kunjunni Raja, K., University of Madras, 1980.

5. A History of Sanskrit Literature (Classical Period) Vol. I, Das Gupta, S. N., II Ed., University of Calcutta, 1962.

6. History of Classical Sanskrit Literature, by Krishnamachariar, M., III Ed., Motial Banarsidass, Delhi, 1974.

7. Mind and art of Bhanabhuti, Vimal Gera, Meharchand Lachhmanrs, the Sanskrit Book Depot., Daryaganj, Delhi, 110 006, 1973.

8. Sanskrit Dramas, Subramania Iyer, S., Sundeep Prakashan, Delhi, 1984.

9. Sanskrit Drama and Dramaturgy, Biswanath Battacarya, Bharata Manisha, Varanasi, 1974.

10. The Sanskrit Drama in its Origin, Developement, Theory and Practice, Keith, A. B., Oxford, 1924.

**MONOGRAPHS :**

1. The social Play in Sanskrit by Ragavan, V., Transaction No. 11, The Indian Institute of Culture, Basavangudi, Bangalore, March 1952.

2. Studies in **Natyasastra,** Tarlekar, G. H., Motilal Banarsidass, Delhi, 1875.

3. The Theory of Sandhi-s and Sandhyairiga-s, Mainkar, T. G., Ajanta Publication India (P) Ltd., Delhi-7, 1978.

4. The Types of Sanskrit Drama, Mankad, D. B., Urmi Prakashan Mandir, Karachi, 1936.

5. Woman in Sanskrit Drama, Ratnamayidevi Dikshit, M. Chand Lachmanddass, Delhi, Dec. 1964.

6. The Zamorins of Calicut, Krishna Iyer, K. V., Calicut, 1939.



# AN APPEAL

Manuscripts on Palmleaf or Paper of the ancient works of the wise men of the past, are the great treasures, solely inherited by the Nation and it is the moral obligation of persons who possess them to preserve them safely for the future generations of mankind.

Probably you have some of these in your possession or you know friends or neighbours who possess them. You can make a great contribution to the cause of the preservation not only of our National Culture but also to the Culture of Humanity as a whole by arranging to present such manuscripts to the famous T. M. S. S. M. Library, Thanjavur.

The Manuscripts so presented will be accepted and acknowledged with pleasure and gratitude by the authorities of the Library, preserved with meticulous care and made available to successive generations of readers and scholars for study and research. The hitherto unpublished works found among them, will be printed and published in due course, as facilities occur, with the expression of the Library's gratitude for your gift.

The great Scholar King of Tanjore, **Rajah Serfoji,** has attained immortal fame by dedicating enormous time and wealth to the expansion and firm establishment of this world famous **"Sarasvati Mahal Library".** It is open to you to share the honour of Serfoji, in your own measure by contributing your manuscripts to the great institution built by him.

This great Honour is beckoning to you to accept it. Will you hasten to take it up? The Library waits for your answer.

**DISTRICT COLLECTOR AND DIRECTOR**
Sarasvati Mahal Library,
Thanjavur.

